# Yukti-kalpataru

By

King Bhoja.

प्रकाशक,—

श्रीसारदाचरण काव्यविनोदः।

६० सीताराम घोष ष्ट्रीट्, दर्शनविद्यालयः,

कलिकाता।

——००——

प्राप्तिस्थानम्,—

१। संस्कृत यन्त्र पुस्तकालय, ३० कर्णओयालिस्ष्ट्रीट्,

कलिकाता।

२। उक्त प्रकाशकस्य समीपे।

——०——

# युक्तिकल्पतरुः ।

महाराज-श्रीभोज-विरचितः ।

EDITED BY

**Pandit—Isvara Chandra Sastrī,**

[ Sānkhya-Vedānta-Nyāya-Darsana-Tīrtha. ]

WITH A FOREWORD

BY

Narendra Nath Law, M. A., B. L.,

*Premchand Roychand Scholar.*

कलिकातानगर्य्याम् ।

सिद्धेश्वरमेशिनयन्त्रे मुद्रितः ।

खीष्टाब्दाः १९१७ ।



मूल्यमस्य २॥०

# Foreword.

The *Yukti-kalpataru* is long known to scholars interested in Indian antiquities as a source of useful and interesting information, and has been utilized by some of them in their works ; but the difficulty of having access to its manuscript copies, and the disadvantage of using unedited texts have long stood in their way of personally acquainting themselves at first hand with its contents and making them widely known. The present edition of the text is expected to remove this long felt want and help, within its own limits, towards the focussing of light on the secular and practical side of early Hindu civilisation which is yet dark in many of its aspects.

The work deals with diverse subjects of secular interest, such as a few topics relating to polity, construction of buildings and selection of sites therefor, articles of furniture, precious stones, ornaments, weapons, draught and other animals, vehicles, ships, ship-building, etc. The last two subjects are very rarely met with and contribute not a little to the value of the book.

The evidences brought together by the learned editor in the Preface point to the eleventh century A. D. as the probable and generally accepted time of its composition, and to its reputed author king Bhoja to be no other than Bhoja Pramāra of Dhār.

The text has been settled by the collation of three manuscripts, one of which is an old transcript of the copy used by Dr. Rajendralala Mitra in the first volume of his *Indo-Aryans*. This transcript, it is hoped, has substantially fulfilled our desire to use its original, and made up for our inability to procure the latter for consultation.

96, Amherst Street, Calcutta.
*August, 1917.* } NARENDRA NATH LAW.

# अवतरणिका ।

---

इह खलु भोज-भूपालोऽशेषशास्त्र-विशारदः निखिलनृपति-मुकुटाभरणो धारानगरीनाथः। एतन्नाम्नाऽन्येपि प्राञ्चो नृपालाः पूर्वमनेके आसन्। तथाच ऋग्वेदे * "भोजायाश्वं संमृजन्त्याशुं भोजायास्ते........भोजस्येदं पुष्करिणीव वेश्म"......... । अत्र दक्षिणा नाम प्रजापतेर्दुहिता, तया सूक्तमात्मनः स्तुतिसम्बन्धं दृष्टम्। तत्रैषा जगती दातृ-प्रशंसा। 'भोजाय' राज्ञे 'अश्वं आशुम्' शीघ्रम् 'सम्मृजन्ति' संमार्ज्जयन्ति-स्नापयन्ति भृत्याः। किञ्च,—भोजाय उद्वहनार्थं अन्यान् वरानपास्य 'शुम्भमाना' स्वलङ्कृता शोभमाना-'कन्या' 'आस्ते' स हि तामर्हतीत्यभिप्रायः। किञ्च, भोजस्य 'इदं' 'वेश्म' गृहं परिस्कृतम्, 'पुष्करिणी' 'देवमाना इव' पुष्करैर्दैवतं विमानमिव......... । इति निरुक्त दैवतकाण्डवृत्तौ श्रीमद्दुर्गाचार्य्याः। नायं वैदिको भोजोऽस्य प्रणेता धाराधीशो वा। एवं महाभारते † पुराणे च भोजः भोजकट-देशश्च प्रख्यातोऽस्ति।

---

* ऋक् सं ८।६।४।५। निरुक्ते अः ७, खः ३।

† महाभारते आदिपर्वणि तृतीयाध्याये,—द्रह्युतनयानां नाम भोज इत्यासीत्। कुन्त्याश्च पालक-पिता, अस्य तु नाम कुन्तीभोज इति। जरासन्धाधीन जनैकनृपतिः। अयोध्यायां कोऽपि नरेश स्तन्नाम्नासीत्। तथैवोत्कलदेशे कोऽपि नृपतिः। वङ्गदेशे तन्नाम्ना त्रयो नृपाला आसन्। ऐतपुरीय प्राचीनलेखे भोजनाम्ना नरेश आसीत्। तथैव कान्यकुब्जे तन्नाम्ना नरपाल आसीत्। इति डाक्तरराजराजेन्द्रलालमित्रेणोक्तम्। एतन्मतेऽपि

भोजपुरी, * श्रीमद्भागवते च † "भोजेन्द्रगेहेऽग्निशिखेवरुद्धा......" इत्यादि कंसराजस्य राजधानी-नाम भोज इति संज्ञासीत्। नचाऽयं महाभारतादि-प्रसिद्धो भोजः एतस्य विरचयिता। भोजप्रबन्धः (बल्लालविरचितः) तस्मादेवमवगम्यते,—आसीद्धारानाम नगर्य्यां सिन्धुलाभिधो राजा, तस्य महिषी सावित्री, तयोर्वार्द्धक्ये भोज-नाम पुत्रो जातः। स यदा पञ्चवर्षवयस्कः तदा स्वीय निधनकालं विदित्वा अनुज-मुञ्जाय राज्य-भारं समर्प्य तदुत्सङ्गे भोजञ्च मुमोच। ततो राज्ञि दिवङ्गते कियत्कालानन्तरं नृपपरिषदि कश्चित् कुक्षि-म्भरि दैवज्ञ आगत्य मुञ्जमहीपं प्राह।—नरेश! भोजस्य भाग्योदयं वक्तुं विधातापि न समर्थः। कोऽहं वराकः कुक्षिम्भरिर्ब्राह्मणः? तथापि वच्मि शशधरोपमं भोजमितोऽन्यत्र प्रेषय। ततो नृपा-ज्ञया भोजेऽध्ययनालयं प्राप्ते प्राह ज्योतिर्विद्‌ः। यथा,—

"पञ्चाशत् पञ्चवर्षाणि सप्तमासा दिनत्रयम्।
भोजराजेन भोक्तव्यं सगौड़ं दक्षिणापथम्॥"

इति श्रुत्वा मुञ्जमहीपालोऽचिन्तयत्। यदिराजश्रीर्भोजं गमिष्यति ततोऽहं जीवन्नपि मृतोपमः। ततो मुञ्जराजः सम्मन्त्र्य बङ्गालाधीश्वरं ‡ महावीरं वत्सराजमाहूय निर्ज्जने तं प्रोवाच। वत्स-राज! त्वमिनं भोजकुमारं त्रिभुवनेश्वरी-विपिने जहि। वत्सराजः भोजोपाध्यायमाहूयावदत् 'भोजमानय' इति। ततो विदित-वृत्तान्तोभोजः कुपितः प्राह। आः हन्त! पाप राज्ञः कुमारं वहि-

---

तेन बहुप्रमाणानि संगृह्य सिद्धान्तितं यत् सिन्धुलतनयो मालवाधीश भोजराजः एकादश शकाब्दे (खृीः ११२६) आसीदस्य कल्पतरोः प्रणेता स एवेत्यनुमीयते। (इण्डो आरियान्स्)।

* कौशाम्बीवा कुशाम्बस्य वत्सराजस्य राजधानी सम्प्रति आरा सेति।

† श्रीमद्भागवते १० स्कन्धे, तृयः अः। ११ श्लोकः।

‡ बङ्गदेशीयं कमपि राजानमित्यर्थः।

रानेतुं तव का शक्तिः ? ततो वामपाद-पादुकामादाय भोजेन भाल-देशे हतो वत्सराजः प्राह,—कुमार! वयं नृपादेश-कारिणः। इत्युक्त्वा वधार्थं बलाद्वत्सराजेन निशि विपिने भोजे नीते वत्सराजस्या-नुजो भोजस्य वधोद्यम-समये—

"एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्व्वमन्यच्च गच्छति॥"

इत्युक्तवान्। तन्निशम्य वत्सराजो निर्वेदमापन्नः। भोज! क्षमस्वेत्युक्त्वा प्रणम्य तं रथे निवेश्य गृहमागत्य भूमिगेहान्तरे संरक्ष्य च कृत्रिमं भोजमस्तकं निर्म्माय मुञ्जराजमागत्य नत्वा प्राह—श्रीमता यदादिष्टम् तन्मयाऽनुष्ठितम्। तद्वधं ज्ञात्वा राजा वत्सराजं प्राह वत्सराज! पुत्रेणासि-प्रहारसमये किमप्युक्तम्? तदा वत्सराजः प्राह, देव! किमपि पत्रं प्रेषितमस्ति। तदिदं गृहाण, छिन्नं शिरश्च दर्शयति। भोजमस्तकं दृष्ट्वा मुञ्जराजः रुरोद, ततः—

"मान्धाता च महीपतिः कृतयुगालङ्कारभूतो गतः,
सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकः।
अन्ये चापि युधिष्ठिर-प्रभृतयो याता दिवम्भूपते!;
नैकेनापि समङ्गता वसुमती मुञ्ज! त्वया यास्यति॥"

इति भोज-विरचितं पत्रस्थं श्लोकं पठित्वा भूमौ पपात च। ततो राजा पण्डितमानीय, मया राजतनयो निहतः, प्रायश्चित्तमुच्य-तामित्युवाच। ततः सर्वे विद्वांसः प्रोचुः, नरेश! सवासाऽनल-माविश। ततो नृपस्य वह्नि-प्रवेशे सुनिश्चिते तद्वृत्तं श्रुत्वा नृपाल-द्वारमागत्य वत्सराजो बुद्धिसागरमब्रवीत्। तात! मया भोजो न मारितः। बुद्धिसागरश्च तस्य कर्णे किमपि कथयति, ततो वत्सराजो निष्क्रान्तः। तन्मुहूर्त्तेण साक्षात्परमेश्वर इवैकः कापालिकः समा-गतः। तं वीक्ष्य बुद्धिसागरः प्रोवाच,—तपस्विन् कुत आगम्यते?

त्वयि कापालिके भुवन-चमत्कारीकलाविशेषः औषधि-विशेषो वास्ति। ततो राजाप्याह—मया सहसा हतं सुतं रक्ष। सोऽब्रवीत् नृपेन्द्र! माभैसीः तनयस्ते नाथ-प्रसादेन नैवमरिष्यति।

प्रातस्तव गेहं स्वयमेव समेष्यति, परं श्मशानभूमौ बुद्धिसागर सचिवेन सह होमद्रव्यसम्भारं प्रेषय। कापालिकेन यदुक्तं तत् सर्व्वं भूपालेन सम्पाद्य बुद्धिसागरामात्यः प्रेषितः। ततश्च यामिन्यां निगूढ़तया वत्सराजगेहाद्-भोजस्तत्र सरित् पुलिनं नीतः। तपस्विना भोज कुमारः पुनर्जीवित इति जनश्रुतिः सर्व्वतोऽप्यजायत। ततः पौरामात्यैः परिवृतो भोजोराजसदनमागतः। ततस्तमालिङ्ग्य रुदन्तं मुञ्जं निवार्य्य भोजः स्तौति। ततो राजा लज्जावनतशिरा सन् स्वीय-सिंहासने भोजमुपवेश्य राज्यभारं समर्प्य वनं गतः। ततो मुञ्जे वनं प्रस्थिते बुद्धिसागरं श्रेष्ठामात्यं विधाय भोजः स्वयं राज्यसुखं बुभुजे। ततो राजपरिषदि सहस्रशः सूरिवरा चतुर्दिग्भ्यः समाजग्मुः। ततो राजा सचिवं प्रत्याह, "लक्षं महाकवेर्देयं तदर्द्धं विबुधस्यच......" इति। ततः क्रमेण वररुचि-सुबन्धु-बाणामर-वामदेव-हरिवंश-शङ्कर--कलिङ्ग-कर्पूर--विनायक--मदन--विद्याविनोद-कोकिल-तारेन्द्र प्रमुखाः सर्वशास्त्रविशारदाः सर्वज्ञा इव बुधवरा राजसभामहर्निशमलङ्कुर्व्वन्ति। कियत्कालानन्तरं कविराज-कालिदासे समागते तेन सार्द्धं भूपेन्द्रस्य परमाप्रीतिरजायत। अन्यत् भोजप्रबन्धे विस्तृतमस्ति। केचित् सूरयः अस्यैरैन्द्रजालिकविद्यां, अपरेतु भोजविद्यां वानुमिमते। अपरेतु शैवतन्त्रोक्ता कामसूत्र-व्याख्याढ-यशोधरेणोल्लिखिताः चतुःषष्ठिकलाविद्याःसन्ति तास्वेवान्तर्नीता ऐन्द्रजालिकविद्या इति वदन्ति।

अन्येतु—यदा यवनमहावीर मामुदगजनी कालञ्जरं समवरुरोध, तदैव भोजनृपतिर्यवनसैन्यं सर्वथा जघान। चालुक्य भूपाला अस्य

प्रतिकूला आसन्।ताननेकवारं समरे जितवान्। परमेकदा ते गुर्ज्जरेश्वर भीमदेवेन सार्द्धं मिलित्वा मालवभूमिं ( राज्यं ) समाक्रम्य भोजनरेन्द्रं पराभूय राज्यश्रियमलभन्त। ततो मालव लक्ष्मी-र्भीम-देवस्याङ्कशायिनी बभूव। भोजस्तु द्विनवत्युत्तरदशशत-( १०९२ ) खृष्टाब्दे कालकरालग्रासमवाप। परमयं भोजनरेशः नानाशास्त्र-विशारदो विविधगुणराजि-विराजमानो ह्यासीत् इति। भोज-प्रबन्ध तच्चरित तत् कथा-निचयेषु मुञ्जराजात् परं भोजस्य राज्य-प्राप्ति-संवादे विद्यमानेऽपि न प्रत्ययमावहति यतः पद्मगुप्त-प्रणीत-नवसाहसाङ्क-चरितेतु भोज-समकालिक-संवादाः सन्ति, तद्विरुद्धा अनेके पुरावृत्तवादा भोजप्रबन्धे विद्यन्ते। उदयपुर-प्रशस्तौ भोज-राजस्याशेष-शौर्य्य-प्रताप-पाण्डित्यादीनां परिचयोऽस्ति। तत्र तु वर्णितमस्ति, यथैवं,—

"साधितं विहितं दत्तं ज्ञातं यत्तन्न केनचित्।
किमन्यत् कविराजस्य श्रीभोजस्य प्रशस्यते॥
चेदीश्वरेन्द्ररथ-तोग्गल-भीममुख्यान्,
कर्णाट-लाटपति-गुर्ज्जरराट्-तुरस्कान्।
यद्भृत्य मात्र विजितानवलोक्य मौला-
दौष्णा बलानि कलयन्ति न योद्धृलोकान्॥
केदार-रामेश्वर-सोमनाथ-सुण्डीर कालानलरुद्रसंज्ञकैः।
सुराश्रयैर्व्व्याप्यच यः समन्ताद् यथार्थ संज्ञां जगतीं चकार॥"

इत्थं वर्णित-श्लोकार्थेन प्रतीयते यत् केदारादिषु तीर्थेषु अनेके देवा-लया भोजराजेन विनिर्म्मिता स्तेन लोकोत्तर चमत्कारित्वं अलम्भि। कामधेन्वाख्य स्मृतिमहानिबन्ध-प्रारम्भे लिखितमस्त्येवं यथा,—भोज-राज दौहित्र-विक्रमार्क-महिषी-गर्भजात-मतादित्यो नियति-वशात् यदा निधनं गतः तदा कोऽपि बौद्धकापालिकः स्वाभीष्ट-सिद्धयर्थं

कायव्यूहरीत्या मतादित्य-मृतकायं प्रविष्टः, तच्छरीरं पुनरुज्जीवयामास। सचैकदा नानादिग्देशस्थान् सग्रन्थान् सूरीन् समाहूय महायज्ञ सम्पादनव्याजेन कश्मलबुद्ध्या सर्व्वान्ग्रन्थान् प्रज्ज्वलितानले निचिक्षेप। अनन्तरं राज्ये सौगत-नयं प्रचचार। समाहुत-सूरिगणा अतिशय दुःख मनुभूय धारेश्वर भोजराजान्तिकमाजग्मुः। ततो मतादित्यस्य यज्ञव्यपदेशेन ग्रन्थभस्मीकरणवृत्तान्तं भोजराजाय निवेदितवन्तः। तच्छ्रुत्वा राज्ञा ज्योतिर्व्विदं तान्त्रिकञ्चाहूय विदितवृत्तेन कायव्यूह-विघटन पूर्व्वकं वौद्ध-सन्न्यासिनो मतादित्यस्य देहात् आभिचारिक-कार्य्येण निर्गमनं सम्पादितम्। तत्सम्पाद्य च विदुषां स्मृति-पथारुढ़विषयैः सर्व्वैः कामधेनुनाम्ना महानिवन्धः सुधीभिर्विरचित एवमन्ये वहवः शास्त्रीया ग्रन्था तदानीं तैर्विद्वद्भिः प्रणीता इत्युचुः॥

भोजप्रवन्धे तु तत् समय एवं व्यलेखि।

"पञ्चाशत् पञ्चवर्षाणि सप्तमासा दिनत्रयम्।
भोजराजेन भोक्तव्यं सगौड़ं दक्षिणापथम्॥"

(३।७।५५)—मितकालं राज्यं प्रत्यपालयत्। अर्थात् दिवसत्रयोत्तर सप्तमासाधिक पञ्चपञ्चाशद्वर्षाण्येव प्रत्यपालयत्। यदा च हर्षदेव पितामहानन्तदेवः काश्मीरं प्रतिपालयामास, तदैव भोजराजो मालवाचशाम्। अनन्तदेवश्च खृः १०६५ मिताभ्यन्तरे नृप आसीत्। स एव भोजदेवस्यापि राज्यकाल इति निर्णीयते। इत्येवं किञ्चिन्न्यूनाधिकं भोजदेव-राज्यकालतया प्राच्य-प्रतीच्येतिहासवेत्तारो मेनिरे।

उइल्सन् साहेवेन दशकुमारचरित भूमिकायां '(खृः १००० ) मितवर्षाभ्यन्तरे एव भोजस्य राजकाल' इति लोकवादमवलम्ब्य दण्डिकवेः समयोऽवाधारि। ततः उइल्सन् साहेव-निर्णीतात्

हर्षदेवस्य राज्याधिकार समय ( १११३ ) मिताब्दात् पूर्व्वमेव राज्य-मधिकुर्व्वता भोजदेवेन धृततया रत्नावली ( हर्षदेवात् ) प्राचीनेति सम्यक् प्रतिभाति। 'पश्चाशत्' इत्यादि भोजप्रवन्धोक्त श्लोके वैमत्या भावात् नाप्यत्राप्रामान्याशङ्का।

"मालवाधिपतेर्भोज प्रहितैः रत्नसञ्चयैः।
अकारयद् येन कुण्ड-योजनं कटकेश्वरे॥"

इत्यनन्तदेवेतिवृत्त-वर्णनावसरेराजतरङ्गिणी-सप्तमतरङ्गस्थः ( १९० ) श्लोकः।

"विष्णोः सुतेनापि धनञ्जयेन विद्वन्मनोरागनिवन्ध-हेतुः।
आविष्कृतं मुञ्जमहीश-गोष्ठीवैदग्धभाजादशरूपमेतत्॥"

इति दशरूपकशेषांशे सरस्वती कण्ठाभरण-धृतात्

"सौजन्याम्बुनिधिः वुधप्रियगुण प्राकार धर्म्मद्रुमः...... ।
श्रीमन्मुञ्ज किमित्यमुं जनमुपस्रष्टुं दृशा नार्हति॥"

इति श्लोकादवधार्य्यते भोजात् प्राग् मुञ्ज आसीदिति।

* धनिका पर नामा धनञ्जयः दशरूपकनिवन्धे वहुशो रत्नावली-मुदाजहार। धनञ्जयश्च मुञ्जमहीपालस्य सभास्तार आसीत्। मुञ्जश्च भोजभूपात् पूर्व्वं धाराराज-सिंहासनमलञ्चकार। भोज-चरित-भोजप्रबन्धादिष्वेवमेवास्ति। यत्तु उइल्सन् साहेवेनोक्तं मुञ्जराज्यकाले हर्षदेवस्य नामापि नासीत्, किन्तु रत्नावली आसी-दिति विचित्ररहस्यम्।

मम्मथेन काव्यप्रकाशः १२२५ खृीः-मितादब्दात् पूर्वमेव निरमायि। यतः १३२५ मिताब्द-कालीनेन माधवाचार्य्येण सर्व्वदर्शनसंग्रहे पातञ्जलदर्शन-प्रस्तावे "तदुक्तं काव्यप्रकाशे" इत्यादिना काव्यप्रकाशोऽवा-

* म, म, महेशचन्द्रन्यायरत्न सि, आइ, इ, महोदय लिखित-काव्यतत्त्वप्रकाश-भूमिकायामेवमस्ति।

धारीति। १३३५ खी:-माधवाचार्य्य आसीदिति विदुषां मतैक्य-मस्ति। एवं यदि काव्यप्रकाश-( २८५पृष्ठे ) धृत "यद्विद्वद्भवनेषु भोजनृपते स्तत्त्यागलीलायितम्" इति श्लोकोक्त भोज एव, पूर्वोक्ताद् भोजकालात् ( १०३३ ) मिताब्दात्परमेव काव्यप्रकाशो निरमायीति युक्तं भोजराज-सम्बन्धिनां पद्यानां भोजदेवात् पूर्व्वमसम्भवादिति।"

अपरे केऽप्येवं वदन्ति,— †

राजमार्त्तण्डे भोजवृत्तौ च भोजस्य विशेषणं "रणरङ्गमल्लनृपति" रित्येवं दृश्यते। डक्तार भाऊदाजी साहेव-लेखानुसारेण भोजकृतं गणिते राजमृगाङ्ककरणञ्चास्ति। यस्यैकाप्रतिलिपि:

जेसुल्मेर *( Jaisalmir )* स्थानस्थ पण्डितद्वारा तेन लब्धा च। तत्रापि ग्रन्थसमाप्तौ योगसूत्रवृत्तिवद् राज्ञो विशेषणं अहर्गणानयनञ्च वेदरस नवमितात् ( ९६४ ) शकात् ( अर्थात् खृ: १०३२ ) तेनैवास्य समय: स एव शक: कल्प्यते। *( see the Literary Remains of Dr. Bhau Daji—p. 246 )*. कोलब्रुक् साहेव निकटे डक्तार उइलियम हण्टारसाहेवेनोज्जयिनीस्थ-ज्योतिर्व्विदां समयावली या प्रेषिता तत्रापि भोजराज-समय: स एव शक: *( Colebrooke's Algebra p. X X X III )*. अयं भोजो धारानगरी समभूषयन् संस्कृत भारतीप्रधानरसिक संस्कृतविद्वन्मण्डलीसम्मानरत्नणेऽद्वितीयो मही-महीन्द्र आसीत्। यद्विषये च कवयो बहुधा विचित्ररचनाप्रपञ्च चातुरीभिरितिहासादिकं वर्णयामासु: राजमृगाङ्ककरणमद्यापि मया न दृष्टम्।"

---

† गणकतरङ्गिण्यां २१ पृष्ठे ( भोजराज:—९६४ ) द्रष्टव्यम्।

मम तु मते—

"शब्दानामनुशासनं विदधता पातञ्जले कुर्व्वता
वृत्तिं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके········"

इत्येवं लेखात् राजमृगाङ्क करणं वैद्यकग्रन्थ एवाभाति नतु ज्यौतिषिक सन्दर्भ इति।

पद्मगुप्तीय भोजचरिते अन्यद्दृश्यते,—

पद्मगुप्तकविः, मुञ्जवाक्‌पतितदनुजसिन्धुराजीय सभां भूषयामास। भोजराजस्य कर्णाटप्रदेशाक्रमणं कल्याणीय चालुक्यराजस्य (तृतीय जयसिंहस्य) विधु वेदग्रहशतमित (९४१) शाकीय शिलालेखादवगम्यते। अत्रशिलालेखे भोजस्य विजयवार्त्ता सर्व्वस्मिन् समुद्घोषिताऽभूत्, एकादशोत्तर सहस्र खीष्टाब्दे समराभिनयोजातः। गुर्ज्जरपति चालुक्य भीमेनसार्कं (१०२१—१०६३) खीष्टाब्दं यावद् भोजराजीय रणवार्त्ता जैनाचार्य्यमेरुतुङ्गस्य प्रवन्ध चिन्तामणौ वर्णितासीत् इति। भोजोऽयं न केवलोनृपतिरपिच सुकविर्महनीय कीर्त्तिः पुरुषपञ्चास्य आसीदिति।

अन्येषां केषाञ्चिन्मते,—

(१) भोजदेवो मालव-देवगिर्य्योरधिपतिः।

(२) जनैक प्रतिहार नृपतिर्नागभट्टतनयः।

(३) शिलालेखतः प्राचीनार्य्यनृपतिः।

(४) कान्यकुब्जपति महाराज-रामतनयः।

अस्याधिकृतस्थानमुत्तर भारतात् काश्मीरं यावत्।

तस्य राज्यकालः (८६२—८८३) पर्य्यन्तम्।

एतन्नाम्ना आदि वराह रौप्यमुद्रा व्यवहृतासीत्।

पश्चाद् महेन्द्रपाल स्तत् सुत स्तस्य सिंहासनमारुरोहेति।

(५) पेश्नोयारस्थानीयः कोऽपि नृपतिः [illegible] प्रणेतेति सम्भाव्यते ।

अपरञ्च—

मेरुतुङ्गवल्लालयोर्मते—परमारवंशजातः मालवे धारानगराधीश एष भोजः। तत्र सिन्धुल नाम राजा, सावित्री नाम तद्महिषी, ताभ्यां वार्द्धक्ये भोज नाम तनयोऽजनि। तस्य पञ्चमेवर्षे स्वानुजाय सभोजं राज्यभारं समर्प्य जनको दिवं ययौ प्रागित्युक्तम् ।

पुनर्वल्लालनये सिन्धुलानुजो मुञ्जः। पद्मगुप्तनयेतु नव साहसाङ्क चरिते वाक्पतिः सिन्धुलस्य पूर्व्वजस्तस्य निधने सिन्धुलराजो राष्ट्रं लेभे। तथाच साहसाङ्कचरिते—( ११७ )

"दिवं यियासुर्ममवाचि मुद्रामदत्तयां वाक्पतिराजदेवः।

तस्यानुजन्मा कविवान्धवस्य भिनत्ति तां सम्प्रति सिन्धुराजः॥"

इत्युभयपरिषदि पद्मगुप्त-राजकविरूपेण समधिक-सम्मानितोऽभूत्। अतो भोजग्रन्थात् पद्मगुप्तोक्तिं समीचीनां मन्ये।

हेमाद्रिसूरिप्रणीत-चतुर्व्वर्ग-चिन्तामण्याख्य धर्म्मशास्त्रीय निवन्धस्य व्रतखण्डे ( ४८ श्लोके ) एवमुल्लेखोऽस्ति—

"यो भोजदेवान्नृपतेः प्रतापी जग्राह वाहं मदमन्द सत्त्वः।

सार्द्धं जनन्या सह जीवितेन सोमेश्वरस्यापि जहार राज्यम्॥"

तस्मिन्नेव महानिवन्धेऽन्यत्रोक्तम्—( ४७ श्लोके )

येनक्षौणी-भृदर्ज्जुनोऽपि वलिना नीतः कथाशेषताम्,

येनोद्दामभुजेन भोजनृपतिः काराकुटुम्बीकृतः।

यद्भम्भागिरि-केशरीवितिहतो लक्ष्मीधरक्ष्मापतिः;

यद्दाहावलिभिः प्रसह्यरुरुधे धाराधराधीश्वरः॥"

निवन्धकृद्धेमाद्रिसूरिस्तु यादवान्वयज सिङ्घननृपति तनय जैतुगी नृपाल-तनुजस्य कन्धाराभिधकृष्णनरेन्द्रानुजस्य महादेवभूपस्या-

मात्यपदमधिरूढ़ इति तस्मिन् चिन्तामणौ सुदीर्घं वृत्तमासीदिति। कृष्णराजश्च शकाब्दे ( ११७० ) मिते ( खृः १२४५ ) बभूवेति काव्यमाला मुद्रित-प्राचीनलेखमालाया ( ३९) संख्यकादानपत्र-प्रकटितादवगम्यते। एतस्मिन्नेव समये नासिकत्र्यम्बके श्रीमद-मलानन्दयतीन्द्रेण वेदान्तकल्पतरुर्व्यरचि। अतो भोजभूभुक् एभ्यः पूर्व्ववर्त्तीति सम्यक् आभाति।

भोजराज विरचित-ग्रन्थास्तु एवमन्यत्र दृश्यन्ते,—

अलङ्कारे—( सरस्वती-कण्ठाभरणम् ), योगे—(राजमार्त्तण्डम्), ज्योतिषे—(राजमार्त्तण्डः, विद्वज्जनवल्लभः, आदित्यप्रतापः), वैद्यके—( राजमृगाङ्ककरणम्, आयुर्व्वेदसर्व्वस्वम्, विश्रान्तचिन्ताविनोदः ), वास्तुशास्त्रे—( समराङ्गणम् ), काव्यशास्त्रे—( शृङ्गारमञ्जरीकथा ), धर्म्मशास्त्रे—( भोजचम्पूः, व्यवहारसमुच्चयः, चारुचर्य्या ), शैवदर्शने—( तत्त्वप्रकाशः, नाममालिकाकोशः ), नीतिशास्त्रे—( युक्तिकल्प-तरुः, विद्याविनोदकाव्यम् ), पाणिनीये—( शब्दानुसासनम् ), अश्वशास्त्रे—( शालिहोत्रीयम् ), शैवे—( शैवसिद्धान्तसंग्रहः ), प्रश्न-चिन्तामणिः, शिवदत्तम्, रत्नकलिका, सूत्रधारीयम् ), सुभाषिते—( सुभाषितप्रबन्धः ) इति। *

---

* आलफ्रेट्क् साहेबस्तदीय ( See Catalogus Catalogorum I, p. 478 ) 'क्याटालोगस् क्याटालोगीराम्' नामक ग्रन्थे, युक्तिकल्पतरुः येषु ग्रन्थेषु व्यव-हृतस्तेषां नाम सूचिकां प्रददौ। परमुक्त साहेबमतं, येषां सन्दर्भाणां भोजराजविरचितत्वेन प्रसिद्धिरस्ति तेषु एकोऽपि ग्रन्थस्तेन राज्ञा नैव विरचित इति। अन्ये साहेबोक्ता ग्रन्था भोजरचिताः सन्तु वा नवा परमयं कल्पतरुर्भोजविरचित एव। ( अन्यत् इण्डी आरियन्स द्वितीयखण्डे )।

अपरेऽपि सुप्राचीन निबन्धकारा भोजराजीय-ग्रन्थानामुल्लेखं विदधुः। शूलपाणिः प्रायश्चित्तविवेके, श्राद्धविवेकप्रारम्भे च भोज-कृत-कामधेनुग्रन्थस्य नाम उल्लिलेख। तथाच—

"विलोक्य धर्मशास्त्राणि कामधेन्वादिसंग्रहान्।"

अयं कामधेन्वाख्यग्रन्थ भोजराजाज्ञया विरचित एव। रघुनन्दन भट्टाचार्य्यः प्रायश्चित्ततत्त्व, मलमासतत्त्व, ज्योतिस्तत्त्वादिषु, श्रीकृष्ण-तर्कालङ्कारः श्राद्धविवेक टीकायां, श्रीमन्माधवाचार्य्यः कालमाधवे, वैद्यकेरुग्विनिश्चये, भावमिश्रः—भावप्रकाशे, केशवार्कः—ज्योतिर्ग्रन्थे, क्षीरस्वामी—अमरटीकायां, सायणाचार्य्यः—स्वीयग्रन्थे, छित्तपः; देवेश्वरः विनायकः इत्येते कवयोऽपि प्रशंसापुरःसरं भोजराजकृतग्रन्थनामोल्लेखं कृतवन्तः। वाचस्पतिमिश्रः (दर्शने) भोजराजीय राजवार्त्तिककारिकोल्लेखं तत्त्वकौमुद्यावसाने कृतवान्। नेदं राजवार्त्तिकं जैनदर्शनव्याख्यानभूतम्। महाराज-राधाकान्तदेव वाहादुरेण शब्दकल्पद्रुमे भोजराजीय-ग्रन्थनाम वहुधा व्यधायि। भोजराजः परमशैव आसीदिति योगसूत्र-वृत्तिस्थ-तदीय श्लोकेभ्योऽनुमीयते। स तत्र वहुधा शिवमस्तौषीत्। तदीय दानपत्रे एवमेवास्ति।

कामन्दकीयनीतिसारस्थानां (८म, ११श, १३श सर्गेषु ५, ४२, २३, ३०, ३३, ४४, ४५) इयत्संख्याक-श्लोकानां युक्तिकल्प-तरुस्थैः कतिपय श्लोकैः समं सम्यक् सारूप्यमस्ति। नीतिसारोऽयं खृष्टाब्दे प्रथमशतके विरचितः। खृष्टाब्द षष्ठशतकस्थेन दण्डि-सूरिणा दशकुमारचरितस्य प्रथमोच्छ्वासावसाने कामन्दकीयं स्मर्य्यते। एष नीतिसारः खृष्टाब्दारम्भ-समये वालिद्वीप-यवद्वीप गच्छद्भि-र्हिन्दुभिर्भारतवर्षान्नीत इति स्व-प्रकाशित नीतिसारभूमिकायां राज राजेन्द्रलालमित्र महाशयः प्राह। अतोनुमीयते कामन्दकीयनीति-

सारात् कल्पतरुरयं पश्चादङ्कित इति। कामन्दकस्तु सर्वथा कौटिलीयमर्थशास्त्रं स्मारं स्मारं नीतिसारमिमं लिलेख।

प्राचीनलेखमालायाम्—४९ लेखः। (४८)—मालवमहीपालप्रशस्तिः। प्रथमे भागे १९७—१९८ पृष्ठे।

(१) जातस्तस्माद्वैरिसिंहोऽन्य नाम्ना,
लोको ब्रूते वज्रट स्वामिनं यम्।
शत्रोर्वर्गं धारयासेर्निहत्य;
श्रीमद्धारा सूचिता येन राज्ञा॥

(२) तस्यानुजो निर्जित हूनराजः,
श्रीसिन्धुराजो विजयार्ज्जितश्रीः।
श्रीभोजराजोऽजनि येन रत्नम्;
नरोत्तमाकल्प ( कम्प ? ) तदद्वितीयम्॥

(३) साधितं विहितं दत्तं ज्ञातं तद् यन्न केनचित्।
किमन्यत् कविराजस्य श्रीभोजस्य प्रशस्यते॥

६—७ पृष्ठे, प्राचीन लेखमालायाम् ( तृतीयलेखः )।

धारानगराधिपति सुप्रसिद्ध भोज महीपतेर्वंश्यस्यार्जुनवर्म्मदेवस्य दानपत्रम्।

परमारकुलोत्तंसः कंसजिन्महिमान्नृपः।
श्रीभोजदेव इत्यासीन्नासीराक्रान्त-भूतलः॥

सम्वत् १२७२ भाद्रपद सुदि १५ वुधे।

प्राचीन लेखमालायां—द्वितीय लेखः ४—५ पृष्ठे। धारानगराधिपतेः सुप्रसिद्धस्य * भोज नरेन्द्रस्य दानपत्रम्।

---

* श्रीमद्भोजदेवस्य अतिवृद्धप्रपितामहः कृष्णराजः, वृद्धप्रपितामहः वैरीसिंहः, प्रपितामहः सीयकदेवः, वाक्पतिराजः पितामहः, पिता च श्रीसिन्धु ( ल ) राजः। सिन्धुराज पर्य्यन्तमुज्जयिन्यां राजधान्यासीत्। तथा च परिमलकवि-प्रणीतनवसाहसाङ्कचरिते ( ११।७ )—

परम भट्टारक महाराजाधिराज परमेश्वर श्रीसीयकदेवपादानुध्यात-परमभट्टारकमहाराजाधिराज परमेश्वर श्रीवाक्पतिराजदेव पादानुध्यात-परमभट्टारक महाराजाधिराजपरमेश्वर श्रीसिन्धुराजदेवपादानुध्यात-परमभट्टारक महाराजाधिराज परमेश्वर श्रीभोजदेवः कुशली ··· ··· ··· ··· ··· ··· ··· ···

सम्वत् १०७८ चैत्रसुदि १४ स्वहस्तोऽयं श्रीभोजदेवस्य। अयमेव श्रीभोजराजस्य समयः सम्भाव्यते।

प्राचीनलेखमालायाः ( द्वितीयभागे )। १४८ पृष्ठे, भोजवर्म्म-राज्यकालः तत्पूर्व्वजानां देवालयस्य प्रशस्तिः। तद्राज्यकालः ( १३४५, A. D. १३०० ) अजयगड़े। लेखश्चायं भोजवर्म्म-कोशाध्यक्षस्य सुभटाख्यस्य देवालयनिर्म्माणं सूचयन् सुभटपूर्वजानां वृत्तं प्रकाशयति। †

---

"अस्तिक्षितावुज्जयिनीतिनाम्ना, पुरीविहायस्यमरावतीव।
ववन्ध यस्यां परमिन्द्रकल्पो महीपतिर्वाक्पतिराजदेवः।"

इत्युक्तेः प्रतीयते।

अयं गौड़व ( हा ) धाख्यकाव्य प्रणेता कान्यकुब्जराजाश्रितो वाक्पतिराजः—धारापति-वाक्पतिराजात् सर्वथा भिन्नः। धारानगरीतु भोजराजेन सम्यग्राजधानीत्वं नीता। तथाहि—

अवाप्तसौख्योपुरि सिन्धुराजः।
राजास्ति तस्यां सकुलाचलेन्द्रः·········

( ११।८ ) इत्यादि नव साहसाङ्कचरिते उज्जयिनी-वर्णनानन्तरं तदधिपति सिन्धुराज समवर्णितः। तत् समयेऽयं ग्रन्थोऽपि कविना परिमलेन प्रणायि।

† मुञ्जोभोजस्य पितृव्यः, भोजप्रबन्धीयकथा तदनुकूल प्रमाणाभावान्नादरणीया। वाक्पतिराज इति मुञ्जस्यनामान्तरं आभाति। दशरूपालोके तुरीय परिच्छेदे श्रीवाक्पति राजदेवनाम्ना समुद्धृतः, तत्रैव च पुनरयमेव श्लोकः मुञ्जनाम्ना समुद्धृतः। एवं पिङ्गल-सूत्रवृत्तौ हलायुधकविना बहुस्थानेषु मुञ्जःअर्य्यते।—

"सर्व्वाभारवसुन्धरोऽपि सुभटो विद्यामविद्यास्थिति: ।
श्रीमद्भोज-महीमहेन्द्रसचिव: प्रख्यात-कीर्त्ति र्गुणै: ॥"

इत्यादिना च भोजराजमन्त्री भोजराज-समकालिक इति सूच्यते ।

( मूले ) अस्मिग्रन्थे द्वितीय पृष्ठे पञ्चदशपङ्क्तौ—'दूतस्य बहु-भेदा वक्ष्यन्ते' इति लेखोऽस्ति । परमनेन प्रतीयते दूतविषयेऽन्यत्र यथा लक्षणादिकमस्ति तथात्रापि प्राचीने कस्मिन्नपि ग्रन्थे आसीत् तदादर्शं पुस्तकं इदानीं नोपलभ्यते । किन्तु लब्धादर्शपुस्तकेषु तादृश-शिरोलेखो विद्यते । तेन लब्धादर्शानुसारेण स शिरोलेखो विन्यस्त: ।

अशुद्धि-पुष्कलानि त्रीण्येवादर्शपुस्तकानि मया अवलोक्य सन्द-

---

"सकलसुकृतैकपुञ्ज: श्रीमान् मुञ्जश्चिरं जयति ।"

"अनवरत-वित्त-वितरण निर्ज्जित चम्पाधिपो मुञ्ज: ।"

"स जयति वाक्पतिराज: सकलार्थि-मनोरथैक कल्पतरु: ।"

एतामूदाहृतार्यास्वार्याद्वये मुञ्ज इति, तृतीयार्यायां च वाक्पतिराज इति नामास्ति ।

अथ चैतद्दानपत्रस्य सम्वत्सरे ( १०३१ ) सुभाषितरत्नसन्दोहनाम ग्रन्थान्ते जैनाचार्या-मितगतियतिना—

"समारूढ़े पूतत्रिदिववसतिं विक्रमनृपे,
सहस्रे वर्षाणां प्रभवतिहि पञ्चाशदधिके, ( १०५० ) ।
समाप्तं पञ्चम्यामवति धरणिं मुञ्जनृपतौ ;
सिते पक्षे पौषे बुधहित मिदम् शास्त्रमनघम् ॥"

इत्युक्तं मुञ्जमहीप राज्यसमयेऽव ।

स्वल्पमेवान्तरमस्ति । तस्मादसिवाक्पतिराज इति मुञ्जस्यनामान्तरं इति भाति । प्रागुज्जयिनी विक्रमार्कस्य राजधानी आसीत्, तस्यमुख्यसभास्तार: कविकुलचूड़ामणि: कालि-दास इति ज्योतिर्व्विदाभरण-तट्टीकातोऽनुमीयते इति ( प्राचीनलेखमालाटीप्पणे ) ।

त्वयि कापालिके भुवन-चमत्कारीकलाविशेषः औषधि विशेषो वास्ति। ततो राजाप्याह—मया सहसा हतं सुतं रक्ष। सोऽब्रवीत् नृपेन्द्र! माभैसीः तनयस्ते नाथ-प्रसादेन नैवमरिष्यति।

प्रातस्तव गेहं स्वयमेव समेष्यति, परं श्मशानभूमौ बुद्धिसागर सचिवेन सह होमद्रव्यसम्भारं प्रेषय। कापालिकेन यदुक्तं तत् सर्व्वं भूपालेन सम्पाद्य बुद्धिसागरामात्यः प्रेषितः। ततश्च यामिन्यां निगूढ़तया वत्सराजगेहाद्-भोजस्तत्र सरित् पुलिनं नीतः। तपस्विना भोज कुमारः पुनर्जीवित इति जनश्रुतिः सर्व्वतोऽप्यजायत। ततः पौरामात्यैः परिवृतो भोजोराजसदनमागतः। ततस्तमालिङ्ग्य रुदन्तं मुञ्जं निवार्य्य भोजः स्तौति। ततो राजा लज्जावनतशिरा सन् स्वीय-सिंहासने भोजमुपवेश्य राज्यभारं समर्प्य वनं गतः। ततो मुञ्जे वनं प्रस्थिते बुद्धिसागरं श्रेष्ठामात्यं विधाय भोजः स्वयं राज्यसुखं वुभुजे। ततो राजपरिषदि सहस्रशः सूरिवरा चतुर्दिग्भ्यः समाजग्मुः। ततो राजा सचिवं प्रत्याह, "लक्षं महाकवेर्देयं तदर्द्धं विवुधस्यच······" इति। ततः क्रमेण वररुचि-सुवन्धु-वाणामर-वामदेव-हरिवंश-शङ्कर--कलिङ्ग-कर्पूर--विनायक--मदन--विद्याविनोद-कोकिल-तारेन्द्र प्रमुखाः सर्वशास्त्रविशारदाः सर्वज्ञा इव वुधवरा राजसभामहर्निशमलङ्कुर्व्वन्ति। कियत्कालानन्तरं कविराज-कालिदासे समागते तेन सार्द्धं भूपेन्द्रस्य परमाप्रीतिरजायत। अन्यत् भोजप्रवन्धे विस्तृतमस्ति। केचित् सूरयः अस्यैरैन्द्रजालिकविद्यां, अपरेतु भोजविद्यां वानुमिमते। अपरेतु शैवतन्त्रोक्ता कामसूत्र-व्याख्यातृ-यशोधरेणोल्लिखिताः चतुःषष्ठिकलाविद्याःसन्ति तास्वेवान्तर्नीता ऐन्द्रजालिकविद्या इति वदन्ति।

अन्येतु—यदा यवनमहावीर मामुदगजनी कालञ्जरं समवरुरोध, तदैव भोजनृपतिर्यवनसैन्यं सर्वथा जघान। चालुक्य भूपाला अस्य

प्रतिकूला आसन्।ताननेकवारं समरे जितवान्। परमेकदा ते गुर्ज्जरेश्वर भीमदेवेन सार्द्धं मिलित्वा मालवभूमिं ( राजं ) समाक्रम्य भोजनरेन्द्रं पराभूय राज्यश्रियमलभन्त। ततो मालव लक्ष्मी-र्भीम-देवस्याङ्कशायिनी बभूव। भोजस्तु द्विनवत्युत्तरदशशत-( १०९२ ) खृष्टाब्दे कालकरालग्रासमवाप। परमयं भोजनरेशः नानाशास्त्र-विशारदो विविधगुणराजि-विराजमानो ह्यासीत् इति। भोज-प्रबन्ध तच्चरित तत् कथा-निचयेषु मुञ्जराजात् परं भोजस्य राज्य-प्राप्ति-संवादे विद्यमानेऽपि न प्रत्ययमावहति यतः पद्मगुप्त-प्रणीत-नवसाहसाङ्क-चरितेतु भोज-समकालिक-संवादाः सन्ति, तद्विरुद्धा अनेके पुरावृत्तवादा भोजप्रबन्धे विद्यन्ते। उदयपुर-प्रशस्तौ भोज-राजस्याशेष-शौर्य्य-प्रताप-पाण्डित्यादीनां परिचयोऽस्ति। तत्र तु वर्णितमस्ति, यथैवं,—

"साधितं विहितं दत्तं ज्ञातं यत्तन्न केनचित्।
किमन्यत् कविराजस्य श्रीभोजस्य प्रशस्यते॥
चेदीश्वरेन्द्ररथ-तोग्गल-भीममुख्यान्,
कर्णाट-लाटपति-गुर्ज्जरराट्-तुरस्कान्।
यद्भृत्य मात्र विजितानवलोक्य मौला-
दोष्णा बलानि कलयन्ति न योद्धृलोकान्॥
केदार-रामेश्वर-सोमनाथ-सुण्डीर कालानलरुद्रसंज्ञकैः।
सुराश्रयैर्व्याप्यच यः समन्ताद् यथार्थ संज्ञां जगतीं चकार॥"

इत्थं वर्णित-श्लोकार्थेन प्रतीयते यत् केदारादिषु तीर्थेषु अनेके देवा-लया भोजराजेन विनिर्म्मिता स्तेन लोकोत्तर चमत्कारित्वं अलम्भि। कामधेन्वाख्य स्मृतिमहानिबन्ध-प्रारम्भे लिखितमस्त्येवं यथा,—भोज-राज दौहित्र-विक्रमार्क-महिषी-गर्भजात-मतादित्यो नियति-वशात् यदा निधनं गतः तदा कोऽपि बौद्धकापालिकः स्वाभीष्ट-सिद्धयर्थं

कायव्यूहरीत्या मतादित्य-मृतकायं प्रविष्टः, तच्छरीरं पुनरुज्जीवयामास। सचैकदा नानादिग्देशस्थान् सग्रन्थान् सूरीन् समाहूय महायज्ञ सम्पादनव्याजेन कश्मलबुद्ध्या सर्व्वान्ग्रन्थान् प्रज्वलितानले निचिक्षेप। अनन्तरं राज्ये सौगत-नयं प्रचचार। समाहुत-सूरिगणा अतिशय दुःख मनुभूय धारेश्वर भोजराजान्तिकमाजग्मुः। ततो मतादित्यस्य यज्ञव्यपदेशेन ग्रन्थभस्मीकरणवृत्तान्तं भोजराजाय निवेदितवन्तः। तच्छ्रुत्वा राज्ञा ज्योतिर्विदं तान्त्रिकञ्चाहूय विदितवृत्तेन कायव्यूह-विघटन पूर्व्वकं बौद्ध-सन्न्यासिनो मतादित्यस्य देहात् आभिचारिक-कार्य्येण निर्गमनं सम्पादितम्। तत्सम्पाद्य च विदुषां स्मृति-पथारूढ़विषयैः सर्व्वैः कामधेनुनाम्ना महानिबन्धः सुधीभिर्विरचित एवमन्ये बहवः शास्त्रीया ग्रन्था तदानीं तैर्विद्वद्भिः प्रणीता इत्यूचुः॥

भोजप्रबन्धे तु तत् समय एवं व्यलेखि।

"पञ्चाशत् पञ्चवर्षाणि सप्तमासा दिनत्रयम्।
भोजराजेन भोक्तव्यं सगौड़ं दक्षिणापथम्॥"

(५।७।५५)—मितकालं राज्यं प्रत्यपालयत्। अर्थात् दिवसत्रयोत्तर सप्तमासाधिक पञ्चपञ्चाशद्वर्षाण्येव प्रत्यपालयत्। यदा च हर्षदेव पितामहानन्तदेवः काश्मीरं प्रतिपालयामास, तदैव भोजराजो मालवाचलाम्। अनन्तदेवश्च खृः १०६५ मिताभ्यन्तरे नृप आसीत्। स एव भोजदेवस्यापि राज्यकाल इति निर्णीयते। इत्येवं किञ्चिन्न्यूनाधिकं भोजदेव-राज्यकालतया प्राच्य-प्रतीच्येतिहासवेत्तारो मेनिरे।

उइल्सन् साहेबेन दशकुमारचरित भूमिकायां '(खृः १००० ) मितवर्षाभ्यन्तरे एव भोजस्य राजकाल' इति लोकवादमवलम्ब्य दण्डिकवेः समयोऽवाधारि। ततः उइल्सन् साहेब-निर्णीतात्

हर्षदेवस्य राज्याधिकार समय (१११३) मिताब्दात् पूर्व्वमेव राज्यमधिकुर्व्वता भोजदेवेन धृततया रत्नावली (हर्षदेवात्) प्राचीनेति सम्यक् प्रतिभाति। 'पश्चाश्चत्' इत्यादि भोजप्रबन्धोक्त श्लोके वैमत्या भावात् नाप्यत्राप्रामान्याशङ्का।

"मालवाधिपतेर्भोज प्रहितैः रत्नसञ्चयैः।
अकारयद् येन कुण्ड-योजनं कटकेश्वरे॥"

इत्यनन्तदेवेतिवृत्त-वर्णनावसरे राजतरङ्गिणी-सप्तमतरङ्गस्थः (१९०) श्लोकः।

"विष्णोः सुतेनापि धनञ्जयेन विद्वन्मनोरागनिबन्ध-हेतुः।
आविष्कृतं मुञ्जमहीश-गोष्ठीवैदग्ध्यभाजादशरूपमेतत्॥"

इति दशरूपकशेषांशे सरस्वती कण्ठाभरण-धृतात्

"सौजन्याम्बुनिधिः बुधप्रियगुण प्राकार धर्म्मद्रुमः...... ।
श्रीमन्मुञ्ज किमित्यमुं जनमुपस्रष्टुं दृशा नार्हति॥"

इति श्लोकादवधार्य्यते भोजात् प्राग् मुञ्ज आसीदिति।

* धनिका पर नामा धनञ्जयः दशरूपकनिबन्धे बहुशो रत्नावलीमुदाजहार। धनञ्जयश्च मुञ्जमहीपालस्य सभास्तार आसीत्। मुञ्जश्च भोजभूपात् पूर्व्वं धाराराज-सिंहासनमलञ्चकार। भोजचरित-भोजप्रबन्धादिष्वेवमेवास्ति। यत्तु उइल्सन् साहेबेरुक्तं मुञ्जराज्यकाले हर्षदेवस्य नामापि नासीत्, किन्तु रत्नावली आसीदिति विचित्ररहस्यम्।

मम्मथेन काव्यप्रकाशः १२२५ खृोः-मितादब्दात् पूर्वमेव निरमायि। यतः १३२५ मिताब्द-कालीनेन माधवाचार्य्येण सर्व्वदर्शनसंग्रहे पातञ्जलदर्शन-प्रस्तावे "तदुक्तं काव्यप्रकाशे" इत्यादिना काव्यप्रकाशोऽवा-

* म, म, ✓ महेशचन्द्रन्यायरत्न सि, आइ, इ, महोदय लिखित-काव्यतत्त्वप्रकाश-भूमिकायामेवमस्ति।

धारीति। १३३५ खौः-माधवाचार्य्य आसीदिति विदुषां मतैक्य-मस्ति। एवं यदि काव्यप्रकाश-( २८५पृष्ठे ) धृत "यद्विद्वद्भवनेषु भोजनृपते स्तत्त्यागलीलायितम्" इति श्लोकोक्त भोज एव, पूर्व्वोक्ताद् भोजकालात् ( १०३३ ) मिताब्दात्परमेव काव्यप्रकाशो निर-मायीति युक्तं भोजराज-सम्बन्धिनां पद्यानां भोजदेवात् पूर्व्वमसम्भवा-दिति।"

अपरे केऽप्येवं वदन्ति,— †

राजमार्त्तण्डे भोजवृत्तौ च भोजस्य विशेषणं "रणरङ्गमल्लनृपति" रित्येवं दृश्यते। उक्तार भाऊदाजी साहेव-लेखानुसारेण भोजकृतं गणिते राजमृगाङ्ककरणञ्चास्ति। यस्यैकाप्रतिलिपिः

जेसुल्मेर *( Jaisalmir )* स्थानस्थ पण्डितद्वारा तेन लब्धा च। तत्रापि ग्रन्थसमाप्तौ योगसूत्रवृत्तिवद् राज्ञो विशेषणं अहर्गणानयनञ्च वेदरस नवमितात् ( ९६४ ) शकात् ( अर्थात् खृः १०३२ ) तेनैवास्य समयः स एव शकः कल्प्यते। *( see the Literary Remains of Dr. Bhau Daji—p. 246 ).* कोलब्रुक् साहेव निकटे डक्तार उइलियम हण्टारसाहेवेनोज्जयिनीस्थ-ज्योतिर्व्विदां समयावली या प्रेषिता तत्रापि भोजराज-समयः स एव शकः *( Colebrooke's Algebra p. XXXIII ).* अयं भोजो धारानगरी समभूषयन् संस्कृत भारतीप्रधानरसिक संस्कृतविद्वन्मण्डलीसम्मानरत्नणेऽद्वितीयो मह्नी-महेन्द्र आसीत्। यद्विषये च कवयो बहुधा विचित्ररचना-प्रपञ्च चातुरीभिरितिहासादिकं वर्णयामासुः राजमृगाङ्ककरणमद्यापि मया न दृष्टम्।"

---

† गणकतरङ्गिण्यां ३१ पृष्ठे ( भोजराजः—९६४ ) द्रष्टव्यम्।

मम तु मते—

"शब्दानामनुशासनं विदधता पातञ्जले कुर्व्वता
वृत्तिं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके………"

इत्येवं लेखाद् राजमृगाङ्क करणं वैद्यकग्रन्थ एवाभाति नतु ज्यौतिषिक सन्दर्भ इति।

पद्मगुप्तीय भोजचरिते अन्यदृश्यते,—

पद्मगुप्तकविः, मुञ्जवाक्पतितदनुजसिन्धुराजीय सभां भूषयामास। भोजराजस्य कर्णाटप्रदेशाक्रमणं कल्याणीय चालुक्यराजस्य (तृतीय जयसिंहस्य) विधु वेदग्रहशतमित (९४१) शाकीय शिलालेखादवगम्यते। अत्रशिलालेखे भोजस्य विजयवार्त्ता सर्व्वस्मिन् समुद्घोषिताऽभूत्, एकादशोत्तर सहस्र खीष्टाब्दे समराभिनयोजातः। गुर्ज्जरपति चालुक्य भीमेनसार्द्धं (१०२१—१०६३) खीष्टाब्दं यावद् भोजराजीय रणवार्त्ता जैनाचार्य्यमेरुतुङ्गस्य प्रबन्ध चिन्तामणौ वर्णितासीत् इति। भोजोऽयं न केवलोनृपतिरपिच सुकविर्महनीय कीर्त्तिः पुरुषपञ्चास्य आसीदिति।

अन्येषां केषाञ्चिन्मते,—

(१) भोजदेवो मालव-देवगिर्य्योरधिपतिः।
(२) जनैक प्रतिहार नृपतिर्नागभट्टतनयः।
(३) शिलालेखतः प्राचीनार्य्यनृपतिः।
(४) कान्यकुब्जपति महाराज-रामतनयः।

अस्याधिकृतस्थानमुत्तर भारतात् काश्मीरं यावत्।
तस्य राज्यकालः (८६२—८८३) पर्य्यन्तम्।
एतन्नाम्ना आदि वराह रौप्यमुद्रा व्यवहृतासीत्।

पश्चाद् महेन्द्रपाल स्तत् सुत स्तस्य सिंहासनमारुरोहेति।

(५) पेश्मोयारस्थानीय: कोऽपि नृपति: परमेतेषु प्राथमिकोऽस्य प्रणेतेति सम्भाव्यते ।

अपरञ्च—

मेरुतुङ्गवल्लालयोर्मते—परमारवंशजात: मालवे धारानगराधीश एष भोज: । तत्र सिन्धुल नाम राजा, सावित्री नाम तद्महिषी, ताभ्यां वार्द्धक्ये भोज नाम तनयोऽजनि । तस्य पञ्चमेवर्षे स्वानुजाय सभोजं राज्यभारं समर्प्य जनको दिवं ययौ प्रागित्युक्तम् ।

पुनर्वल्लालनये सिन्धुलानुजो मुञ्ज: । पद्मगुप्तनयेतु नव साहसाङ्क चरिते वाक्पति: सिन्धुलस्य पूर्व्वजस्तस्य निधने सिन्धुलराजो राष्ट्रं लेभे । तथाच साहसाङ्कचरिते—( १।७ )

"दिवं यियासुर्ममवाचि मुद्रामदत्तयां वाक्पतिराजदेव: ।

तस्यानुजन्मा कविवान्धवस्य भिनत्ति तां सम्प्रति सिन्धुराज: ॥"

इत्युभयपरिषदि पद्मगुप्त-राजकविरूपेण समधिक-सम्मानितोऽभूत् । अतो भोजप्रबन्धात् पद्मगुप्तोक्तिं समीचीनां मन्ये ।

हेमाद्रिसूरिप्रणीत-चतुर्व्वर्ग-चिन्तामण्याख्य धर्म्मशास्त्रीय निवन्धस्य व्रतखण्डे ( ४८ श्लोके ) एवमुल्लेखोऽस्ति—

"यो भोजदेवान्नृपते: प्रतापी जग्राह वाहं मदमन्द सत्त्व: ।

सार्द्धं जनन्या सह जीवितेन सोमेश्वरस्यापि जहार राज्यम् ॥"

तस्मिन्नेव महानिवन्धेऽन्यत्रोक्तम्—( ४७ श्लोके )

येनक्षौणी-भृदर्ज्जुनोऽपि वलिना नीत: कथाशेषताम्,

येनोद्दामभुजेन भोजनृपति: काराकुटुम्बीकृत: ।

यद्भम्भागिरि-केशरीविविजितो लक्ष्मीधरक्ष्मापति: ;

यद्बाहावलिभि: प्रसह्य ववधे धाराधराधीश्वर: ॥"

निवन्धकृद्धेमाद्रिसूरिस्तु यादवान्वयज सिङ्घननृपति तनय जैतुगी नृपाल-तनुजस्य कृष्णाराभिधकृष्णनरेन्द्रानुजस्य महादेवभूपस्या-

मात्यपदमधिरूढ़ इति तस्मिन् चिन्तामणौ सुदीर्घं वृत्तमासीदिति। कृष्णराजश्च शकाब्दे ( ११७० ) मिते ( खृ: १२४५ ) बभूवेति काव्यमाला मुद्रित-प्राचीनलेखमालाया ( ३८) संख्यकाद्दानपत्र-प्रकटितादवगम्यते। एतस्मिन्नेव समये नासिकत्र्यम्बके श्रीमद-मलानन्दयतीन्द्रेण वेदान्तकल्पतरुर्व्यरचि। अतो भोजभूभुक् एभ्य: पूर्व्ववर्त्तीति सम्यक् आभाति।

भोजराज विरचित-ग्रन्थास्तु एवमन्यत्र दृश्यन्ते,—

अलङ्कारे—( सरस्वती-कण्ठाभरणम् ), योगे—(राजमार्त्तण्डम्), ज्योतिषे—(राजमार्त्तण्ड:, विद्वज्जनवल्लभ:, आदित्यप्रताप:), वैद्यके—( राजमृगाङ्ककरणम्, आयुर्व्वेदसर्व्वस्वम्, विश्रान्तचिन्ताविनोद: ), वास्तुशास्त्रे—( समराङ्गणम् ), काव्यशास्त्रे—( शृङ्गारमञ्जरीकथा ), धर्म्मशास्त्रे—( भोजचम्पू:, व्यवहारसमुच्चय:, चारुचर्य्या ), शैवदर्शने—( तत्त्वप्रकाश:, नाममालिकाकोश: ), नीतिशास्त्रे—( युक्तिकल्पतरु:, विद्याविनोदकाव्यम् ), पाणिनीये—( शब्दानुसासनम् ), अश्वशास्त्रे—( शालिहोत्रीयम् ), शैवे—( शैवसिद्धान्तसंग्रह: ), प्रश्नचिन्तामणि:, शिवदत्तम्, रत्नकलिका, सूत्रधारीयम् ), सुभाषिते—( सुभाषितप्रबन्ध: ) इति। *

---

* आलफ्रेट्क् साहेवस्तदीय (See Catalogus Catalogorum I, p. 478) 'क्याटालोगस् क्याटालोगोराम्' नामक ग्रन्थे, युक्तिकल्पतरु: येषु ग्रन्थेषु व्यवहृतस्तेषां नाम सूचिकां प्रददौ। परमुक्त साहेवमतं, येषां सन्दर्भाणां भोजराजविरचितत्वेन प्रसिद्धिरस्ति तेषु एकोऽपि ग्रन्थस्तेन राज्ञा नैव विरचित इति। अन्ये साहेवोक्ता ग्रन्था भोजरचिता: सन्तु वा नवा परमयं कल्पतरुर्भोजविरचित एव। ( अन्यत् द्रष्टव्यं आरियन्स द्वितीयखण्डे )।

अपरेऽपि सुप्राचीन निबन्धकारा भोजराजीय-ग्रन्थानामुल्लेखं विदधुः। शूलपाणिः प्रायश्चित्तविवेके, श्राद्धविवेकप्रारम्भे च भोज-कृत-कामधेनुग्रन्थस्य नाम उल्लिलेख। तथाच—

"विलोक्य धर्म्मशास्त्राणि कामधेन्वादिसंग्रहान्।"

अयं कामधेन्वाख्यग्रन्थ भोजराजाज्ञया विरचित एव। रघुनन्दन भट्टाचार्य्यः प्रायश्चित्ततत्त्व, मलमासतत्त्व, ज्योतिस्तत्त्वादिषु, श्रीकृष्ण-तर्कालङ्कारः श्राद्धविवेक टीकायां, श्रीमन्माधवाचार्य्यः कालमाधवे, वैद्यकेरुग्विनिश्चये, भावमिश्रः—भावप्रकाशे, केशवार्कः—ज्योतिर्ग्रन्थे, क्षीरस्वामी—अमरटीकायां, सायणाचार्य्यः—स्वीयग्रन्थे, छित्तपः; देवेश्वरः विनायकः इत्येते कवयोऽपि प्रशंसापुरःसरं भोजराजकृतग्रन्थनामोल्लेखं कृतवन्तः। वाचस्पतिमिश्रः (दर्शने) भोजराजीय राजवार्त्तिककारिकोल्लेखं तत्त्वकौमुद्यावसाने कृत-वान्। नेदं राजवार्त्तिकं जैनदर्शनव्याख्यानभूतम्। महाराज-राधाकान्तदेव वाहादुरेण शब्दकल्पद्रुमे भोजराजीय-ग्रन्थनाम वहुधा व्यधायि। भोजराजः परमशैव आसीदिति योगसूत्र-वृत्तिस्थ-तदीय श्लोकेभ्योऽनुमीयते। स तत्र वहुधा शिवमस्तौषीत्। तदीय दानपत्रे एवमेवास्ति।

कामन्दकीयनीतिसारस्थानां (८म, ११श, १३श सर्गेषु ५, ४२, २३, ३०, ३३, ४४, ४५) इयत्संख्याक-श्लोकानां युक्तिकल्प-तरुस्थैः कतिपय श्लोकैः समं सम्यक् सारूप्यमस्ति। नीतिसारोऽयं खृष्टाब्दे प्रथमशतके विरचितः। खृष्टाब्द षष्ठशतकस्थेन दण्डि-सूरिणा दशकुमारचरितस्य प्रथमोच्छ्वासावसाने कामन्दकीयं स्मर्य्यते। एष नीतिसारः खृष्टाब्दारम्भ-समये वालिद्वीप-यवद्वीप गच्छद्भि-र्हिन्दुभिर्भारतवर्षान्नीत इति स्व प्रकाशित नीतिसारभूमिकायां राज राजेन्द्रलालमित्र महाशयः प्राह। अतोनुमीयते कामन्दकीयनीति-

सारात् कल्पतरुरयं पश्चादङ्कित इति। कामन्दकस्तु सर्वथा कौटिलीयमर्थशास्त्रं स्मारं स्मारं नीतिसारमिमं लिलेख।

प्राचीनलेखमालायाम्—४९ लेखः। (४८)—मालवमहीपालप्रशस्तिः। प्रथमे भागे १९७—१९८ पृष्ठे।

(१) जातस्तस्माद्वैरिसिंहोऽन्य नाम्ना,
लोको ब्रुते वज्रट स्वामिनं यम्।
शत्रोर्वर्गं धारयासेर्निहत्य;
श्रीमद्धारा सूचिता येन राज्ञा॥

(२) तस्यानुजो निर्जित हूणराजः,
श्रीसिन्धुराजो विजयार्ज्जितश्रीः।
श्रीभोजराजोऽजनि येन रत्नम्;
नरोत्तमाकल्प ( कम्प ? ) ष्मदद्वितीयम्॥

(३) साधितं विहितं दत्तं ज्ञातं तद् यन्न केनचित्।
किमन्यत् कविराजस्य श्रीभोजस्य प्रशस्यते॥

६—७ पृष्ठे, प्राचीन लेखमालायाम् ( तृतीयलेखः )।

धारानगराधिपति सुप्रसिद्ध भोज महीपतेर्वंश्यस्यार्जुनवर्म्मदेवस्य दानपत्रम्।

परमारकुलोत्तंसः कंसजिन्महिमान्नृपः।
श्रीभोजदेव इत्यासीन्नासीराक्रान्त-भूतलः॥

सम्वत् १२७२ भाद्रपद सुदि १५ बुधे।

प्राचीन लेखमालायां—द्वितीय लेखः ४—५ पृष्ठे। धारानगराधिपतेः सुप्रसिद्धस्य * भोज नरेन्द्रस्य दानपत्रम्।

---

* श्रीमद्भोजदेवस्य अतिवृद्धप्रपितामहः कृष्णराजः, वृद्धप्रपितामहः वैरीसिंहः, प्रपितामहः सीयकदेवः, वाक्पतिराजः पितामहः, पिता च श्रीसिन्धु ( ल ) राजः। सिन्धुराज पर्य्यन्तमुज्जयिन्यां राजधान्यासीत्। तथा च परिमलकवि-प्रणीतनवसाहसाङ्कचरिते ( ११।१७ )—

परम भट्टारक महाराजाधिराज परमेश्वर श्रीसीयकदेवपादानुध्यात-परमभट्टारकमहाराजाधिराज परमेश्वर श्रीवाक्पतिराजदेव पादानुध्यात-परमभट्टारक महाराजाधिराजपरमेश्वर श्रीसिन्धुराजदेवपादानुध्यात-परमभट्टारक महाराजाधिराज परमेश्वर श्रीभोजदेवः कुशली ··· ··· ··· ··· ··· ··· ··· ···

सम्वत् १०७८ चैत्रसुदि १४ स्वहस्तोऽयं श्रीभोजदेवस्य। अयमेव श्रीभोजराजस्य समयः सम्भाव्यते।

प्राचीनलेखमालायाः ( द्वितीयभागे )। १४८ पृष्ठे, भोजवर्म्म-राज्यकालः तत्पूर्व्वजानां देवालयस्य प्रशस्तिः। तद्राज्यकालः ( १३४५, A. D. १३०० ) अजयगड़े। लेखश्चायं भोजवर्म्म-कोशाध्यक्षस्य सुभटाख्यस्य देवालयनिर्म्माणं सूचयन् सुभटपूर्वजानां वृत्तं प्रकाशयति। †

---

"अस्तिचितानुज्जयिनीतिनाम्ना, पुरीविहायस्यमरावतीव।
ववन्ध यस्यां परमिन्द्रकल्पो महीपतिर्वाक्पतिराजदेवः॥"

इत्युक्तेः प्रतीयते।

अयं गौड़व ( हो ) धाख्यकाव्य प्रणेता कान्यकुब्जराजाश्रितो वाक्पतिराजः—धारापति-वाक्पतिराजात् सर्वथा भिन्नः। धारानगरीतु भोजराजेन सम्यग्राजधानीत्वं नीता। तथाहि—

अवाप्तसौख्योपुरि सिन्धुराजः।
राजास्ति तस्यां सकुलाचलेन्द्रः·········

( ११।१८ ) इत्यादि नव साहसाङ्कचरिते उज्जयिनी-वर्णनानन्तरं तदधिपति सिन्धुराज स्ववर्णितः। तत् समयेऽयं ग्रन्थोऽपि कविना परिमलेन प्रणायि।

† मुञ्जोभोजस्य पितृव्यः, भोजप्रबन्धीयकथा तदनुकूल प्रमाणाभावान्नादरणीया। वाक्पतिराज इति मुञ्जस्यनामान्तरं आभाति। दशरूपालोके तुरीय परिच्छेदे श्रीवाक्पति राजदेवनाम्ना समुद्धृतः, तत्रैव च पुनरयमेव श्लोकः मुञ्जनाम्ना समुद्धृतः। एवं पिङ्गल-सूत्रवृत्तौ हलायुधकविना बहुस्थानेषु मुञ्जःअर्थ्यते।—

"सर्व्वाभारवसुन्धरोऽपि सुभटो विद्यामविद्यास्थिति:।
श्रीमद्भोज-महीमहेन्द्रसचिव: प्रख्यात-कीर्त्ति र्गुणै:॥"

इत्यादिना च भोजराजमन्त्री भोजराज-समकालिक इति सूच्यते।

(मूले) अस्मिग्रन्थे द्वितीय पृष्ठे पञ्चदशपङ्क्तौ—'दूतस्य बहु-भेदा वक्ष्यन्ते' इति लेखोऽस्ति। परमनेन प्रतीयते दूतविषयेऽन्यत्र यथा लक्षणादिकमस्ति तथात्रापि प्राचीने कस्मिन्नपि ग्रन्थे आसीत् तदादर्श पुस्तकं इदानीं नोपलभ्यते। किन्तु लब्धादर्शपुस्तकेषु तादृश-शिरोलेखो विद्यते। तेन लब्धादर्शानुसारेण स शिरोलेखो विन्यस्त:।

अशुद्धि-पुष्कलानि त्रीण्येवादर्शपुस्तकानि मया अवलोक्य सन्द-

---

"सकलसुकृतैकपुञ्ज: श्रीमान् मुञ्जश्चिरं जयति।"
"अनवरत-वित्त-वितरण निर्ज्जित चम्पाधिपो मुञ्ज:।"
"स जयति वाक्पतिराज: सकलार्थि-मनोरथैक कल्पतरु:।"

एतामूदाहृतार्य्याद्वयार्याद्वये मुञ्ज इति, तृतीयार्यायां च वाक्पतिराज इति नामास्ति।

अथ चैतद्दानपत्रस्य सम्वत्सरे (१०३१) सुभाषितरत्नसन्दोहनाम ग्रन्थान्ते जैनाचार्या-मितगतियतिना—

"समारूढ़े पूतत्रिदिववसतिं विक्रमनृपे,
सहस्रे वर्षाणां प्रभवतिहि पञ्चाशदधिके, (१०५०)।
समाप्तं पञ्चम्यामवति धरणिं मुञ्जनृपतौ;
सिते पक्षे पौषे बुधहित मिदम् शास्त्रमनघम्॥"

इत्यक्तं मुञ्जमहीप राज्यसमयेव।

स्वल्पमेवान्तरमस्ति। तस्मादसिवाक्पतिराज इति मुञ्जस्यनामान्तरं इति भाति। प्रागुज्जयिनी विक्रमार्कस्य राजधानी आसीत्, तस्यमुख्यसभास्तार: कविकुलचूड़ामणि: कालि-दास इति ज्योतिर्व्विदाभरण-तट्टीकातोऽनुमीयते इति (प्राचीनलेखमालाटीप्पणे)।

र्शोऽयं यथामति परिशोधितम्। परं यदि प्रमादात् स्खलितं क्वापि वाऽशुद्धं तिष्ठेत्तदा सुधीजनैः क्षपया क्षन्तव्यम्। यतः—

'प्रमादात् स्खलनं यातु भवत्येव न संशयः'। इतिशम्।

शकाब्दाः १८३९। ई १९१७।
श्रावण कृष्ण चतुर्थी। कलिकाता,
९० नं सीतारामघोष वर्त्मस्थः
दर्शनविद्यालयः।

श्रीईश्वरचन्द्र शर्म्म-शास्त्री।

---

# एतद् ग्रन्थस्यादर्शपुस्तकानां नामानि कृतज्ञतया प्रकाश्यन्ते।

१। (क) संज्ञकं पुस्तकं गभर्णमेण्टसंस्कृतविद्यामन्दिर-पुस्तकालयस्थं, महामहोपाध्याय डक्तार श्रीयुक्त सतीश चन्द्र विद्या-भूषण एम्, ए; पि, एइच्, डि; एम्, आर्, एस् महाशयैः प्रदत्तम्। अर्द्धशुद्धप्रायं, वङ्गाक्षरैर्लिखितम्। सम्पूर्णं, अक्षरात्रुटितम्। शकनरपतेरतीताब्दाः १७३२ इति प्रतिलिपिकालः।

२। (ख) संज्ञकं पुस्तकं वङ्गाक्षरैर्लिखितम्। अर्द्धशुद्धप्रायम्, अत्र लेखादि समयो नास्ति। सम्पूर्णं मध्ये किञ्चित् खण्डितम्। डक्तार राजराजेन्द्रलाल मित्रेण इण्डोआरियान्स-नाम स्वकृतग्रन्थे यस्य विवरणं प्रदत्तम्, तस्यैकाप्राचीन-प्रतिलिपिर्मया लब्धा व्यवहृता च सा।

३। (ग) संज्ञकं पुस्तकं प्रयागस्थ महामहोपाध्याय धार्म्मिक-प्रवर श्रीयुक्त आदित्यराम भट्टाचार्य्य एम्, ए, महाभागैः प्रदत्तम्, वङ्गाक्षरैर्लिखितम्। अशुद्धिबहुलम्। सम्पूर्णमक्षरात्रुटितम् खण्डि-तञ्च। अत्र लेखादि-समयो नास्ति।

# युक्तिकल्पतरोः शुद्धिपत्रिका ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | १६ | 'दूतस्य वह्नु'......अवतरणिकायां १ पृष्ठे द्रष्टव्यम् | |
| ८ | १२ | विग्रह | विग्रहः |
| ९ | १३ | नभश्वानिव | नभस्वानिव |
| १५ | ७ | मस्या | मत्स्या |
| २९ | ४ | दोषौ | दोषो |
| २९ | १३ | वीर्य्याढ्याः | वीर्य्याढ्याः |
| ३० | २ | स्वामिहस्ते | स्वामिहस्ते |
| ३३ | १० | लाभोः | लाभः |
| ३७ | १७ | स्ता | स्तथा |
| ३८ | १४ | रत्नका | रत्नका |
| ४० | १८ | पिलाङ्गौ | पिलाङ्गो |
| ४२ | ६ | रत्नकाश्च | रत्नकाश्च |
| ४४ | ९ | कुर्य्यांत् | कुर्य्यात् |
| ५७ | १९ | पीठा | पीठा |
| ५९ | ३ | नृषति | नृपतिं |
| ५९ | १७ | महीभुजाम् | महीभुजाम् |
| ६६ | १४ | ऋद्धिमात् | ऋद्धिमान् |
| ६८ | ४ | ध्वस्याग्रे | ध्वजस्याग्रे |
| ६८ | १५ | विलासा | विशाला |
| ६९ | २ | भूजाम् | भुजाम् |
| ६९ | १४ | मुक्ता | युक्ता |
| ७० | २१ | शिव | शिवः |
| ७१ | ८ | ध्वषा | ध्वजा |
| ७२ | १५ | भव्यनामा | भव्यमाना |
| ७२ | १७ | शीलः | शीलः |

| पृष्टे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ७३ | ९ | भव्यमानं तो | भव्यमानतो |
| ७३ | २० | प्रायसः | प्रकाशाः |
| ७४ | ४ | चैत्र | चत्र |
| ७५ | २२ | लोलूपैः | लोलुपैः |
| ७६ | १५ | राजीय | राजीये |
| ७७ | १० | कह्लारं | कह्लारं |
| ७८ | ११ | भुजाम्भुवेत् | भुजाम्भवेत् |
| ८१ | ४ | दैवेसु | दैवेषु |
| ८३ | ११ | सम्नः | संम्नः |
| ८६ | १० | वज्रान्ये | वज्राग्ये |
| ८७ | ३ | शोभा | शोभाः |
| ८७ | १९ | भासो | भासो |
| ८९ | २ | प्राय | प्रायं |
| ८९ | १९ | तनुधारयेत् | तन्नधारयेत् |
| ९० | २ | शोभा | शोभा |
| ९० | ४ | मृत्यूः | मृत्युः |
| ९० | १५ | पुरुषा | परुषा |
| ९० | १७ | समासतो | समानतो |
| ९२ | १३ | विद्वास्तान् | विद्वांस्तान् |
| ९२ | १७ | तुम्बुरुत्थः | तुम्बुरूत्थः |
| ९३ | ६ | प्रमृज्य | प्रमृष्ठं |
| ९४ | ११ | भागेण | भागेन |
| ९५ | २५ | कारणे | धारणे |
| ९८ | ७ | विच्छूरिता | विच्छुरिता |
| ९९ | ३ | रावभयानि | राम्बुभयानि |
| ९८ | ;२ | युत | सुत |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९९ | ९ | विस्फूरि | विस्फुरि |
| ९९ | १९ | धारनात् | धारणात् |
| १०० | ५ | न्मेर्पं | न्मेर्यं |
| १०० | १४ | त्रिभुने | त्रिभुवने |
| १०१ | ३ | हन्यात | हन्या |
| १०३ | ९ | भा | मा |
| १०३ | १३ | गौरैः | गौरैः |
| १०४ | ६ | भाग | भागी |
| १०४ | १६ | रुपिणी | रूपिणी |
| १०७ | ७ | भुवि | भूरि |
| ,, | १४ | वैश्व्यः | वैश्वं |
| ११० | ७ | सर्व्वम्भूवेत् | सर्व्वम्भवेत् |
| ११० | २० | दूरापाम् | दुरापाम् |
| ११२ | ६,७ | रुचस्व | रूचस्व |
| ११५ | १ | विसुक्तानि | वियुक्तानि |
| ११९ | ४ | योग्य | योग |
| १२० | १४ | नादम् | नादात् |
| १२३ | १ | सर्व्व | सार्व्व |
| १२६ | १४ | ममा | समा |
| १२७ | २२ | नभोऽम्बुधौ | नभोऽम्बुधौ |
| १२८ | १० | तोर | तीर |
| ,, | ,, | रूप | रुप |
| १२८ | ११ | मक | मर |
| १२९ | ८ | छूरयति | छुरयति |
| १३० | १८ | विस्तवाब्धि | विस्तराब्धि |
| १३५ | २१ | रूपेताः | रुपेताः |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १३९ | ९ | नेव | नैव |
| १४२ | ५ | मेषाद्रि | मेघाद्रि |
| १४३ | ४ | छद्रं | छिद्रं |
| १४३ | १३ | धनयो | ध्वनयो |
| १४४ | ७ | साधर्मे | साधर्ये |
| १४७ | १० | भूजङ्ग | भुजङ्ग |
| १४९ | २२ | च्छक्र | च्छल |
| १५० | २० | स्याज्यो | स्त्याज्यो |
| १५५ | १४ | धम्र: | धूम्र: |
| १६८ | २३ | परीया | परीक्षाया |
| १७१ | ७ | एषां | आसां |
| १७५ | १६ | साम्यतु | साम्यन्तु |
| १७६ | ५ | मणिरुक्त | अनिरुक्त |
| १७६ | १५ | सहृज | सहृज: |
| १७७ | १८ | स्त्यक्ता | स्त्यक्ता |
| १७९ | १ | नौकायां | नौकानां |
| १८० | १८ | दीनेभ्य | दीनेभ्य: |
| १८३ | ५ | चुरा | खुरा |
| १८६ | १४ | वर्त्तौ | वर्त्तौ |
| १८७ | ३ | यदीच्छे:त् | यदीच्छेत् |
| १८९ | १५ | वक्त | रक्त |
| १९४ | १० | स्तेना | स्तेन |
| १९७ | ७ | क्रुद्दा | क्रुद्धा |
| १९९ | ६ | गकानां | गजानां |
| २०० | ७ | स्तब्ध | गुच्छ |
| २०३ | १४ | भिद्यते | भिद्येते |
| २०७ | ८ | मद्दो | मद्दो |
| २११ | १ | भृग | मृग |
| २१२ | २० | तद्व | तदेव |
| २२६ | ८ | ततत्पर | तत्पर |

# युक्तिकल्पतरु-विषयसूची ।

समाप्तं सूची-पत्रम् ।

---

# अथ युक्तिकल्पतरु: ।

## ( श्रीभोजराजीय: )

## ( अत्र नीति युक्ति: )

ओं नम: शिवाय ।

विश्व सर्गविधौ वेधा स्तत्पालयति यो विभु: ।
तदत्ययविधावीश स्तं वन्दे परमेश्वरम् ॥ १ ॥
कंसानन्दमकुर्व्वाण: कं सानन्दं करोति य: ।
तं देववृन्दैराराध्यमनाराध्यमहम्भजे ॥ २ ॥
नमामि शास्त्रकर्त्तॄणां चरणानि मुहुर्म्मुहु: ।
येषां वाच: पावयन्ति (१) श्रवणेनैव सज्जनान् ॥ ३ ॥
नानामुनि * निबन्धानां सारमाकृष्य यत्नत: ।
तनुते भोजनृपति र्युक्तिकल्पतरुं मुदे ॥ ४ ॥
विबुधाभीष्टदममुं कल्पवृक्षं समाश्रित: (२) ।
प्राप्नोतीष्टतमां सिद्धिं बुधा: ! (३) संसेव्यतामयम् ॥ ५ ॥

---

(१) पारयन्ति (ख) पुस्तक पाठ: ।

(२) समाश्रितम् (ख) पुस्तक पाठ: ।

(३) बुधै: (ख) पुस्तक पाठ: ।

---

* इह तु आर्य्याणां बहून्येव प्राचीनानि नीतिपुस्तकानि समुगासन् । तेषु च वार्हस्पत्यं, औशनसम्, विश्वामित्रीयम्, धौम्यश्चैतानि पुरातनानि । एवं कौटिलीयम्, कामन्दकीयम्, नीतिमयूखादीनि च मध्यकालिकानि । अपराणि च भर्तृहरीयादीनि । महर्षिमन्वादीनां संहितासु च बहुषु प्रकरणेषु सन्ति नीतिविषया: । पुराण-ज्योति:शास्त्र-चिकित्साशास्त्राणां प्रकरणेषु च वर्त्तन्ते बहुधा नीतय: ।

दण्डनीति र्यस्य मूलं ज्योतिश्शास्त्रं प्रकाण्डकम् ।
दृष्टार्था इतरा विद्याः शाखा पुष्पं तथेतराः ॥ ६ ॥
अप्यदृष्टफलं (४) यस्य रसस्तस्यामृतं सताम् ।
सोऽयं कल्पतरुर्धीराः ! उपास्यो भूप-मन्त्रिणाम् ॥ ७ ॥
संश्रित्यामुं कल्पवृक्षमन्यशास्त्राण्यवीक्ष्य च (५) ।
राजभि र्मन्त्रतामर्थो यः शास्त्रार्थोत्तमो भुवि ॥ ८ ॥
अयमिष्टतमो भूपैर्योयो हितफल-प्रदः ।
अन्येषाञ्च भवेदिष्टः प्रियस्त्वेषान्ददात्यपि ॥ ॥ ९ ॥
अस्य नीत्यासमारम्भश्छन्दोग्रन्थैः समापनम् ।
नीतिहीन नरेन्द्राणां नश्यन्त्याशु सुसम्पदः ॥ १० ॥
अतो नीतिः प्रयत्नेन श्रवणीया नृपोत्तमैः ।
अतः प्रथमतो नीतिशास्त्रमत्र निवध्यते ॥ ११ ॥
नीति र्वृहस्पति-प्रोक्ता तथैवौशनसोपरा * ।
उभयोरविरुद्धात्र निरूप्या नीतिरुत्तमा ॥ १२ ॥
गुरुः पुरोहितोऽमात्यो मन्त्री दूतश्च लेखकः ।
ज्योतिर्ज्ञोन्तःपुराध्यक्ष वलाध्यक्षादिकं क्रमात् ।
पुनः पुनः परीक्ष्यैव स्वस्वकार्ये नियोजयेत् ॥ १३ ॥

---

(४) अथ दृष्टफलम् (ख) पुस्तक पाठः ।

(५) अन्य शास्त्राणि वीक्ष्यचेति पाठः समीचीनः ।

---

* अत्र त्रयो वृहस्पतयः, एकोदेवगुरुः, अन्यश्चार्व्वाकगुरुः, अपरः संहिता प्रणेतृ ऋषिः । तत्र देवगुरुणा प्रोक्ता नीतिः वार्हस्पत्यनीतिः । उशनसा शुक्रेण प्रोक्ता नीतिरौशनसी । एवमन्यैः प्रोक्ता-नीतिसन्दर्भा बहव सन्ति ।

## अथ तेषां परीक्षा यथा—

सदाचारः कुशलधीः सर्व्वशास्त्रार्थ-पारगः ।
नित्यनैमित्तिकानाञ्च कार्य्याणां कारकः शुचिः ॥ १४ ॥
अपर्व्व-मैथुन-परः पितृ-देवार्च्चने रतः ।
गुरुभक्तो जित-क्रोधो विप्राणां हितकृत् सदा ॥ १५ ॥
दयावान् शील-सम्पन्नः सत्कुलीनो महामतिः ।
परदारेषु विमुखो दृढ़-सङ्कल्पको द्विजः ॥ १६ ॥
अन्यैश्च वैदिकगुणै र्युक्तः कार्यो गुरुर्नृपैः ।
एतैरेव गुणै र्युक्तः पुरोधाः स्यान्महीभुजाम् ॥ १७ ॥
शान्तो विनीतः कुशलः सत्कुलीनः शुभान्वितः ।
शास्त्रार्थतत्त्वगोऽमात्यो भवेद् भूमिभुजामिह ॥ १८ ॥
तथा बुद्धिमतां श्रेष्ठो धार्म्मिकः शास्त्रवित्तमः ।
हीनस्याप्य परीधेन * भूपमन्त्री प्रकीर्त्तितः ॥ १९ ॥
परेङ्गितज्ञः परवाग् व्यङ्ग्यार्थस्यापि तत्त्वविद् ।
सदोत्पन्नमति र्धीरो दूतःस्यात् पृथिवीपतेः ॥ २० ॥

---

## दूतस्य बहुभेदा वक्ष्यन्ते ।

नीतिशास्त्रार्थ कुशलो लेख्यालेख्य-विशारदः ।
बह्वर्थवक्ता चाल्पेन लेखकः स्यात् सभापटुः ॥ २१ ।
ज्योतिःशास्त्र-विशेषज्ञः सुन्दराङ्गः सभापटुः ।
कुलक्रमागतः शुद्धो गणकः स्यान्महीपतेः ॥ २२ ॥

---

* 'हीनस्याप्य परीधेन' इत्यनेनीत्कोचादिराहित्यं राज्ञीहितानुष्ठानपरत्वञ्च सूच्यते ।

वृद्धः (१) कुलोद्गतः शक्तः पितृपैतामहः शुचिः ।
राज्ञामन्तःपुराध्यक्षो विनीतश्च तथेष्यते ॥ २३ ॥
हयशिक्षा विधानज्ञ * स्तच्चिकित्सित-पारगः ।
अश्वाध्यक्षो महीभर्त्तुः शुभक्तश्च प्रशस्यते ॥ २४ ॥
गजलक्षण-जातिज्ञ † स्तच्चिकित्सित पारगः ।
निर्भयश्च विशुद्धश्च गजाध्यक्षः प्रशस्यते ॥ २५ ॥
अस्त्र (२) शास्त्रेषु कुशलो बहुबन्धु-जनान्वितः ।
शुद्धः कुलोद्भवो विद्वान् धर्म्मभीरु रभीस्तथा ॥ २६ ॥
युद्धाध्यक्षः ‡ स्मृतोराज्ञां दुर्गसन्धानकार्यवित् (३) ।
अध्यक्षान् विविधान् कुर्यु स्तत्र तत्र विपश्चितः ॥ २७ ॥

---

(१) बुद्धः इति (ख) पुस्तक पाठः ।
(२) अस्त्र शस्त्रेषु इति (ख) पुस्तक पाठः ।—अत्रास्त्रशास्त्राणि धनुर्व्वेद वृहच्छार्ङ्गधर युद्धजयार्णवादीनि ।
(३) कार्यकृत् इति (ख) पुस्तक पाठः ।

---

* शालिहोत्रीय नकुलीय-जयदत्तीयानि ज्ञेयानि ।

† गजायुर्व्वेदशास्त्रे गजानां लक्षण-चिकित्सा-पालन-वर्द्धनानि निर्द्दिष्टानि सन्ति ।

‡ "कुलीनः शीलसम्पन्नो धनुर्व्विद्याविशारदः ।
हस्तिशिक्षाश्वशिक्षासु कुशलः श्लक्ष्ण-भीषणः ॥
निमित्त-शकुन ज्ञाने वेत्ता चैव चिकित्सिते ।
व्यूहतत्त्वविधानज्ञः फल्गु सारविधानवित् ॥
राज्ञा सेनापतिः कार्य्यो ब्राह्मणः क्षत्रियोऽथवा ।"
(मात्स्ये—२१५ अः)

कविकल्पलतायाम्—
"सेनापतिर्जितावासः स्वामिभक्तः सुधीरभी ।
अभ्यासी वाहने शस्त्रे शास्त्रे च विजयी रणे ॥"
"सेनाग्र सेनानिगर तौ मम" (शब्दग, प्रम-)

अप्रमत्तानलुब्धांश्च विरोषांश्चैव राजसु ।
राज्ञामाज्ञानुरूपेण तत्तत्कर्म्म प्रकुर्व्वताम् ॥ २८ ॥
प्रसादञ्च महीपालः कुर्या त्कार्य्यानुरूपकम् ।
सर्व्वे सेवितुमिच्छन्ति महीपालं धनाशया ॥ २९ ॥
स्वत(४)स्ते तु महीपालैः परीक्ष्यास्तत्र कोविदैः * ।
कोषो महीपते र्जीवो न तु प्राणाः कथञ्चन ॥ ३० ॥
द्रव्यं हि राजा भूपस्य नश्वरोरमिति स्थितिः ।
धर्म्महेतोः सुखार्थाय भृत्यानां भरणाय च ॥ ३१ ॥
आपदर्थञ्च संरक्ष्यः कोषः कोषवता सदा ।
धनात् कुलं प्रभवति धनाद्धर्म्मः प्रवर्त्तते (५) ॥ ३२ ॥
नाधनस्य भवेद्धर्म्मः कामांश्चैव कथञ्चन ।
अधर्म्मान्न धनं कुर्य्यात्तद्धनं गृह्यते परैः ॥ ३३ ॥
स्वयं पापस्य पात्रं स्यात् सिंहो हस्तिवधादिव ।
तादात्विको मूलहरः कदर्य्य स्त्रिविधोऽर्थकः ? ॥ ३४ ॥
उत्पन्नार्थ-व्ययकरो यो भविष्यद्धनाशया ।
स तादात्विक आख्यातः कल्याणो तस्य नायतिः ॥ ३५ ॥
यः पित्राद्यर्ज्जितं वित्त मन्यायेन तु भक्षयेत् ।
स मूलहर आख्यात स्तदुदर्कोऽपि चाशुभः ॥ ३६ ॥

---

(४) सुतास्ते तु इति (ख) पुस्तक पाठः ।
(५) प्रवर्द्धते इति (ख) पुस्तक पाठः ।

---

* धनलिप्सया सर्व्वे साधवो दुर्ज्जना वा सुधियो वा महीपालं आश्रयन्ति, परं राज्ञो-हि तेषां स्वतः सचिवेन, विदुषा वा परीक्षणमुचितम् । विना परीक्षया सुजन-दुर्ज्जन-निश्चये राज्ञोऽनिष्टञ्च स्यादिति ।

स कदर्य्यस्तु भृत्या(६)त्म-पीड़नैरर्थसञ्चयी ।
तद्धनं राज-दायाद-तस्कराणां निधिर्भवेत् ॥ ३७ ॥
भिक्षा च राजकोषश्च स्तोक-स्तोकेन वर्द्धते ।
अञ्जनञ्च(७) धनञ्चैव स्तोक-स्तोकेन क्षीयते ॥ ३८ ॥
कोषस्य साधनोपायो मुख्यं राष्ट्रमिति स्मृतम् ।
भूगुणैर्वर्द्धते राष्ट्रं तद्वृद्धि (८) र्नृपवृत्तता ॥ ३९ ॥
राष्ट्रोपायेन (९) संरक्ष्या ग्रामे ग्रामे कृषीवलाः ।
तेभ्यः कृषि स्ततश्चार्थो अर्थेभ्यः सर्व्वसम्पदः ॥ ४० ॥
शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा ।
तथा वर्षेषु वर्षेषु कर्षणाद्भूगुण-क्षयः * ॥ ४१ ॥
एकस्यां गुणहीनायां कृषिमन्यत्र कारयेत् ॥ ४२ ॥

———— •• ————

## अथ बलम् ।

रथिनः सादिनश्चैव गजारोहाश्च सत्तमाः ।
पत्तयश्च महाकाया बलमेतच्चतुर्व्विधम् † ॥ ४३ ॥

---

(६) भृतार्थ इति (ख) पुस्तक पाठः ।
(७) अर्ज्जनञ्च इति (ख) पुस्तक पाठः ।
(८) तद्बुद्धिः इति (ख) पुस्तक पाठः ।
(९) अपायेन इति (ख) पुस्तक पाठः ।

---

* प्रत्यब्दं कर्षणेन चैतस्य शस्योत्पादनशक्तिर्ह्रसत्येव । अतएवहि कृषीवलैः कृष्टभूमौ तच्छक्तिपरिवृद्ध्यर्थं पर्य्युषित-गोमय-पङ्क करीषभस्मादिकं प्रदातव्यमित्यादि बृहत्पराशरीय-कृषिग्रन्थेऽस्ति ।

† "एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगाश्चैव पत्तिरित्यभिधीयते ॥" (इति भरतः)

मौलभूतं श्रेणीवद्धं संहृतन्तु स्मृतम्बलम् ।
पूर्वं पूर्वं गरीयस्तु बलानां व्यसनन्तथा ॥ ४४ ॥
रथो बलं समे देशे गजस्तु विषमे बलम् ।
जाङ्गले बलमश्वाश्व बलं नौका जलप्लुते ॥ ४५ ॥
पदातयस्तु सर्व्वत्र बलं स्यात् पृथिवीभुजः ।
राज्ञा युद्धाय युज्येत यदन्यद्द्विविधं बलम् ॥ ४६ ॥
सर्वं पत्तिबलाधीनं तस्मात्पत्ति-बलं बलम् ॥ ४७ ॥

——००——

## अथ यानम् ।

चतुष्पदश्च द्विपदं विपदम्बहुपादकम् ।
चतुर्व्विध मिहोद्दिष्टं यानं भूमिभुजोमतम् ॥ ४८ ॥
गजाश्वादि चतुष्पादं दोलादि द्विपदम्भवेत् ।
नौकाद्यं विपदं ज्ञेयं रथाद्यं बहुपादकम् ॥ ४९ ॥
व्योमयानं * विमानं वा पूर्व्वमासीन्महीभुजाम् ।
यथानुगुण-सम्पन्नानेता नाहुः सुखप्रदान् ॥ ५० ॥

——००——

## अथ यात्रा ।

गुणातिशयसम्पन्नः शत्रुंयाया ज्जिगीषया ।
यदि पश्चात्प्रकोपेण यदि राष्ट्रेण कण्टकाः ॥ ५१ ॥

---

* श्लोकाई (क)-(ख) पुस्तके नास्ति ।—"विमानं हंससंयुक्तम्" मार्कण्डेयपुराणे । 'सर्व्वेभ्योऽवसरन्ददाति पुष्पकवत्' इति परिमले । एवमेव भारतरामायणादौ विमाननामास्ति । कैषाञ्चिद्विदुषां नये पुष्पकविमान-व्योमयानानि एकार्थबोधकानि ।

संधा(ङ्ग)यान्यत्र यायाद्वा पार्ष्णिग्राहेण (१) शत्रुणा ।
राचावुलूको विनिहन्ति (२) काकान्,
काकोऽप्युलूकं(३) रजनी व्यपाये ।
इति स्वकालं समुदीक्ष्य * यायात् ;
काले फलन्तीह समीहितानि॥ ५२ ॥

प्रबल-व्यसनोपेतं दुर्भिक्षादि-प्रपीड़ितम् ।
सम्भू(म्भृ)तान्तरकोपेतं न यायात् पृथिवीपतिः ॥ ५३ ॥
निजदैवानुकूल्ये हि प्रातिकूल्ये परस्य च ।
यायान्नृपो यतो दैवं बलमेतत्परं मतम् ॥ ५४ ॥
निरातङ्के (४) निरुत्पाते निरुद्विग्ने निरामये ।
विपक्षे जयमिच्छन्ति राजानो विजिगीषवः ॥ ५५ ॥

——— ०० ———

## अथ विग्रह ।

यत्रायुद्धे † (५) ध्रुवं नाशो युद्धे जीवितसंशयः ।
तं कालमेकं युद्धस्य प्रवदन्ति मनीषिणः ॥ ५६ ॥

---

(१) वाहेन इति (ग) पुस्तक पाठः ।
(२) निवहन्ति इति (क)—(ख) पुस्तक पाठः ।
(३) उलूको इति (क)—(ख) पुस्तक पाठः ।
(४) 'अन्यत्र तु' इति (ग) पुस्तक पाठः ।
(५) यत्र युद्धे इति (ग) पुस्तक पाठः ।

---

* —श्लोकोऽयं शाकुन-विषये । अथवा यदा स्वस्य प्राबल्यं शत्रोर्दौर्बल्यं तच्चयायादिति काकोलूक न्यायः ।

† यत्रायुद्धेति—अरातिना सह राज्ञो युद्धे निश्चिते तेन निधनं राज्यापहरणञ्च अवश्यम्भावि, अतो युद्धं श्रेयः, विना संग्रामेन मरणात् समरे मरणं राज्ञो धर्म्मः स एव युद्धकालः ।

आत्मोदये विगृह्णीयात् चोभो नात्म(थ)बले यदि।
व्यसने च प्रवर्त्तव्यं शत्रौ न तु विपर्य्यये ॥ ५७ ॥
स्वयं राज्ञा न योद्धव्यं येऽपि शस्त्रास्त्रकोविदैः।
मृता (६) युद्धेषु दृश्यन्ते शक्तेभ्यः शक्तिमत्तराः ॥ ५८ ॥
रथयुद्धं समे देशे विषमे हस्ति-सङ्गरः।
अश्वयुद्धं मरौ देशे पत्ति-युद्धञ्च दुर्गमे ॥ ५९ ॥
अत्यये सर्व्वयुद्धं स्यान्नौकायुद्धं जलप्लुते।
संहत्य योधयेदन्यान् कामं विस्तारयेद्बहून् ॥ ६० ॥
सूचीमुखमनीकं (७)स्यादल्पं हि वहुभिः सह।
अपि पञ्चाशतः (८) शूरा निघ्नन्ति परवाहिनीम् ॥ ६१ ॥
येऽपि वा पञ्च षट् सप्त संहिताः (९) कृतनिश्चयाः।

---

## अथ चरः।

विवस्वानिव तेजोभि र्नभस्वानिव वेगतः।
राजा चरेज्जगत् सर्व्वं प्राप्नुयाल्लोकसम्मतीः (१०) ॥ ६२ ॥
तर्केङ्गितज्ञ स्मृतिमान् स्वीयभाव-प्रकाशकः।
क्लेशायाससहोदक्षः सर्व्वत्र भयवर्ज्जितः ॥ ६३ ॥

---

(६) कृता (हृता) इति (ग) पुस्तक पाठः।
(७) अत्र सूचीमुखमनीकं यत्तद्वदवस्थित-वाहिनीत्यर्थः।
(८) आदि पञ्चाशतः इति (ग) पुस्तक पाठः।
(९) सञ्चिता इति (क)-(ख) पुस्तक पाठः।
(१०) सम्मतैः इति (क)-(ख) पुस्तक पाठः।

सुभक्तो (११) राजसु तथा कार्य्याणां प्रतिपत्तिमान्।
नृपो निहन्याच्चारेण परराष्ट्रं विचक्षणः ॥ ६४ ॥
काल(१२)ज्ञान्मन्त्रकुशलान् सांवत्सर चिकित्सकान्।
तथान्यानपि युञ्जीत समर्थान् शुद्धचेतसः ॥ ६५ ॥
सङ्कुद्धांश्च (१३) तथा लुब्धान् दृष्टार्था-तत्त्व भाषिणः (१४)।
पाषण्डिन स्तापसादीन् परराष्ट्रे नियोजयेत् ॥ ६६ ॥
स्वदेश परदेशज्ञान् सुशीलान् सुविचक्षणान्।
वार्त्ताहर्य्यान् बहूंश्चैव चराणां विनियोजयेत् ॥ ६७ ॥
नैकस्य वचने राजा चारस्य-प्रत्ययं वहेत्।
द्वयोः सम्बन्ध माज्ञाय तद्युक्तं कार्य्यमारभेत् ॥ ६८ ॥
तस्माद्राजा प्रयुञ्जीत चरान् बहुमु(सु)खान् बहून्।
नीरता वामना (१५) कुब्जा स्तद्विधा ये च कारवः ॥ ६९ ॥
भिक्षुक्यश्चारणा दास्यो मालाकार्यः (१६) कलाविदः।
अन्तःपुरगतां वार्त्तां निर्हरेयु रलक्षिताम्(न्) ॥ ७० ॥
प्रकाशश्चाप्रकाशश्च चरस्तु द्विविधो मतः।
अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूतसंज्ञकः ॥ ७१ ॥

---

(११) सभक्तो (भक्तौ) इति (ख) पुस्तक पाठः।

(१२) कालज्ञान् (लभ्यः) (ग) पुस्तक पाठः।

(१३) संक्रुद्धान् (क) (ग) पुस्तक पाठः।

(१४) अतत्त्वभाषिणः (क)-(ग) पुस्तक पाठः।

(१५) वासना इति (क) पुस्तक पाठः।
नीरताः क्लैव्यं गता, निर्गतं रतं रमणं यस्मादिति वा। भिक्षुक्यः परिव्राजिकाः।

(१६) मालाकाराः इति (ग) पुस्तक पाठः।

## अथ दूतलक्षणम् ।

दूतञ्चैव प्रकुर्वीत सर्व्वशास्त्र-विशारदम् ।
इङ्गितज्ञं तथा सभ्यं दक्षं सत्कुल(१७)सम्भवम् ॥ ७२ ॥
अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् ।
वपुष्मान् वीतभीर्वाग्मी दूतोराज्ञः प्रशस्यते ॥ ७३ ॥
दूत एव हि सन्धत्ते भिनत्त्येव हि सङ्गता(म)न् ।
विमृष्टार्थो (१८) मितार्थश्च तथा शासन-हारकः ॥ ७४ ॥
दूता स्त्रयोऽमात्यगुणैः समैः पादार्द्धवर्ज्जितैः ।
विमृष्टार्थः कार्यवशात् शासनं न करोति यः ॥ ७५ ॥
मितार्थः कार्यमात्रोक्तौ न कुर्यादुत्तरोत्तरम् ।
यथोक्तवादी (१९) सन्देश-हारको लेखहारकः ॥ ७६ ॥
तत्र दूतो व्रजन्नेव चिन्तये दुत्तरोत्तरम् ।
वार्त्ताविशेषं भूपाय न (२०) झटित्यङ्गवेश्मनि ॥ ७७ ॥
दूतोहि न (२१) लिखेत् किञ्चिन्निर्णिता विनिसंशयम् ।
पृच्छमानो हि न ब्रुयात् स्वामिनः क्वापि वैशसम् * ॥ ७८ ॥
पणवन्धो (२२) भवेत् सन्धिः स्वयं हीन (२३) स्तमाचरेत् ।

---

(१७) सु(स)कुल इति (क)-(ख) पुस्तक पाठः ।
(१८) विमृष्यार्थः इति (क) पुस्तक पाठः ।
(१९) यथोक्तवाणी इति (क) पुस्तक पाठः ।
(२०) झटितीत्यङ्ग इति (क) पुस्तक पाठः ।
(२१) हि स लिखेत् इति (क) पुस्तक पाठः ।
(२२) पणवन्धः इति (क)-(ख) पुस्तक पाठः ।
(२३) स्वयं हि न इति (ग) पुस्तक पाठः ।

---

* वैशसं-वधं, विशेषानिष्टापातं, प्रतिरोधं वा न वदेत् इति ।

## अथ सन्धिः ।

मर्य्यादोल्लङ्घनं नास्ति यदि शत्रोरितिस्थितिः ॥ ७९॥
मर्य्यादोल्लङ्घनं यत्र शत्रौ संशयितं भवेत् ।
न तं संशायितं कुर्यात् * इत्युवाच वृहस्पतिः † ॥ ८० ॥
बलवद्विगृहीतः सन् नृपोऽनन्य प्रतिश्रयः (२४) ॥ ८१ ॥
आपन्न-सन्धि भावेन विदध्यात्कालयापनम् (२५) ॥ ८२ ॥
ये च दैवेनोपहता राष्ट्रं येषाञ्च दुर्गतम् ।
वहवो रिपवो येषां तेषां सन्धि र्विधीयते ॥ ८३ ॥
दुर्म्मन्त्रो भिन्नमन्त्रश्च (२६) नीतिधर्म्मरतश्च यः ।
एतैः सन्धिं न कुर्व्वीत विशेषात् पूर्व्वपीड़ितैः ॥ ८४ ॥
सन्धिं हि तादृशैः कुर्व्वन् प्राणैरपि हि हीयते ॥ ८५ ॥

———*———

## आसनम् ।

अन्यद्वारा विपक्षन्तु विगृह्यासनमुच्यते ।
अरिं विगृह्य वा स्थानम् विग्रहासनमुच्यते ॥ ८६ ॥

---

(२४) प्रतिश्रियं इति (क) पुस्तक पाठः ।
(२५) कालयापनां इति (ख) पुस्तक पाठः ।
(२६) श्वानीतिधर्म्म इति (ग) पुस्तक पाठः ।

---

* यदि शत्रोः प्रतिपक्षस्य, सन्धेर्नियमोल्लङ्घनं नास्ति तदा स्वयं तेन हीनोपि सन्धि-माचरेत् । सर्व्वत्रतु पणवद्धोहि सन्धिरावश्यकः । अविश्वस्ते प्रतिपक्षे तत्पराभव सम्भवे च सन्धिर्नैव कार्य्यः ।

† आदि नीति प्रवक्ता, नतु चार्व्वाक गुरुः ।

अन्येश्च (२७) विजिगीषोश्च विग्रहे क्षीयमानयोः।
सन्धाय यदवस्थानं सन्धा (२८) यासनमुच्यते ॥ ८७ ॥
उदासीने मध्यमे वा समाने प्रतिशङ्कया।
एकीभूय व्यवस्थानं सम्भूयासनमुच्यते ॥ ८८ ॥
सर्व्वेषां प्रीतिजननं निजराष्ट्रस्य लक्षणम्।
एतत् प्रीत्यासनं नाम सर्व्वासन-महत्तरम् ॥ ८९ ॥

——*——

## अथ द्वैधम्।

बलिनोर्द्विषतोर्मध्ये वाचा मौनं (२९) समर्पयेत्।
द्वैधीभावेन वर्त्तेत * काकाक्षिवदलक्षितः ॥ ९० ॥
यापयेद्दक्रमास्थाय सन्निकृष्टतरं तयोः।
उभयोरपि संयापे सेवेत बलवत्तरम् ॥ ९१ ॥

——*——

## अथाश्रयः।

अस्थितौ यदि कल्याणं भवेत् संश्रयणन्तथा।
भवति श्रेयसे राज्ञां विपरीतं न कर्हिचित् ॥ ९२ ॥

---

(२७) अन्यस्य इति (क) पुस्तक पाठः।
—अयं पाठः समीचीनः।
(२८) सन्ध आसनं इति (ख) पुस्तक पाठः।
(२९) वाचात्मानं इति (ख) पुस्तक पाठः।

---

* काकाक्षिन्यायः—यथा काकस्यैकमेव नेत्रमुभयोश्चक्षुषोः कार्य्यं सम्पादयति किम्वा कीकर इव झटित्येव लक्ष्यालक्ष्यं उभयं पश्यति तद्वत् द्वैधीभावे राज्ञाऽवस्थातव्यम्।

उच्छिद्यमानो बलिना आश्रयेद्बलवत्तरम् ।
विनीतवत्तत्र कालं नयेदिति मतिर्ध्रुवा(म्) ॥ ९३ ॥
दद्द्बलं वा कोषं वा भूमिं वा भूतिसम्भवाम् ।
आश्रयेदभियोक्तारं समाश्रय गुणान्वितम् ॥ ९४ ॥
वीत-व्यसनमश्रान्तं महोत्साहं महामतिम् ।
प्रविशन्ति महाराजमपाम्पतिमिवापगाः ॥ ९५ ॥
अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनम् ।
प्रमदेवहृद्धपतिं नेच्छत्युपगूहीतुं कमला ॥ ९६ ॥
उत्साहाच्छ्रियमाप्नोति उत्साहाच्च महद् यशः ।
तस्मात्सर्व्वोपधा (१) शुद्ध मुत्साहं नित्यमाचरेत् ॥ ९७ ॥
अमर्ष(र्ष)श्चैव शौर्यञ्च शीघ्रकारित्वमेवच ।
तत्कर्म्मणि प्रवीणत्व मित्युत्साह-गुणामताः ॥ ९८ ॥
व्यसनस्यागमद्दार मनुत्साहो महीपतेः ।
सामदान दण्डभेदा इत्युपाय-चतुष्टयम् ॥ ९९ ॥
साम-सिद्धं प्रशंसन्ति * सर्व्वतस्त्र विपश्चितः ।
स्रवन्निवामृतं वाचा सामोपायं समाचरेत् ॥ १०० ॥
लुब्धं क्षीणं प्रदानेन सत्कृत्यवशमानयेत् ।
भेदं कुर्व्वीत यत्नेन मन्त्रामात्यपुरोधसाम् ॥ १०१ ॥
यथा बलं प्रकुर्व्वीत † दुष्ट-दण्डनिपातनम् ॥ १०२ ॥

---

(१) सर्व्वोपरि(री) शुद्धः इति (ख) पुस्तक पाठः ।

---

* चतसृषु नीतिषु साम्नः प्रधानत्वादेव प्रशंसन्ति विपश्चितः ।

† दुष्टस्य दमनं शिष्टस्य परिपालनञ्च बलानुसारेण कर्त्तव्यमिति ।

## अथ दण्डः ।

दण्डः संरक्षते धर्म्मं * तथैवार्थं विधानतः ।
कामं संरक्षते यस्मात्त्रिवर्गो † दण्ड उच्यते ॥ १०३ ॥
राजदण्ड भयाल्लोकाः पापाः पापं न कुर्व्वते ।
यमदण्ड भयादेके परलोक भयात्तथा ‡ ॥ १०४ ॥
दण्डश्चेन्नभवेल्लोके ¶ विभजन् साध्वसाधु वा ।
शूले§मत्स्यानिवाऽपक्ष्यन् दुर्व्वलान् वलवत्तराः ॥ १०५ ॥
अपराद्धेषु भूपालो दण्डं कुर्य्याद् यथाविधि ।
अन्यथाकरणात्तस्य राजा भवति किल्विषी ॥ १०६ ॥
विरुद्धमपि जल्पन्तो दूता दण्ड्या न भूभृता ।
दूत हन्ता तु नरकमाविशेत् सचिवैः सह ॥ १०७ ॥
विपक्षवचनादन्यो भृत्यो दण्डं न चार्हति ।
विपक्ष वचनाद्दण्डः स्वामिनं नरकं नयेत् ॥ १०८ ॥

---

* दमनार्हाणां दण्ड एव समुचितः, तदेवोक्तं भगवता—"दण्डोदमयतामस्मि" इति ।

† त्रिवर्गः—धर्म्मार्थकामा इति ।

‡ त्रिषु राजदण्ड यमदण्ड परलोक शासनेषु लोकानां राजदण्ड-भयं सदपि प्रत्यक्षत्वात् तस्यावश्यम्भावित्वं नास्ति । परलोकभयं यमदण्डभयञ्चावश्यम्भावित्वात्तयोर्लोकमात्रे परिव्याप्तिः ।

¶ "प्रजाः संरक्षितुं सम्यक् दण्डनीतिः समाहितः" । महाभाः, शाः, पः, ७० ।

§ अत्र तुलादीत्यादि प्रामादिकः पाठस्त्रिषु आदर्श पुस्तकेषु दृश्यते । यतो मानवधर्म्म-शास्त्रीय-सप्तमाध्यायस्य विंशति श्लोक तद्भाष्य टीकाविरोधात् । तथाहि—

"शूले मत्स्या निवा-पक्ष्यन् दुर्व्वलान् वलवत्तराः" ।

"जले मत्स्यानिवा भक्ष्यन् दुर्व्वलान् वलवत्तराः ।"

इति महाभारते शान्ति-पर्व्वणि, ६७ अः, १० ।

अस्ति योगवाशिष्ठे मात्स्य न्यायः, तदेव लौकिक न्यायसंग्रहे । रामायणेऽयोध्याकाण्डेऽपि ६७ सः, १२ श्लोः । "अभुवाराजकं तीक्ष्णं मात्स्यन्याय-कदर्थितम् ।"

मन्त्रमूलं यतो राज्यं (३) अतो मन्त्रः सुरक्षितः।
कुर्य्याद्राजा सदा मन्त्रान् कर्म्मणामाफलोदयात् ॥ १०९ ॥
अर्थानर्थौ हि यत्तो भौ संशयश्च परीच्यते ।
समन्त्र इति विज्ञेयः शेषाश्च खलु विभ्रमाः ॥ ११० ॥
एकमेव विषं हन्ति शस्त्रेणैकश्च बध्यते ।
सराष्ट्रां (४)सम्पदं हन्ति राज्ञाञ्च (५) मन्त्रविप्लवः ॥ १११ ॥
करिष्यन्नप्रभाषेत कृतान्येवतु दर्शयेत् ।
धर्म्मार्थ-काम-कार्य्याणि कृतो मन्त्रो न भिद्यते ॥ ११२ ॥
गिरिपृष्ठ (६) मुपारुह्य (७) प्रासादम्बारहोगतः * ।
सराष्ट्रं रभसं (८) हन्ति राजानं मन्त्रविप्लवः ॥ ११३ ॥
अपथे निश्शलाके वा तत्र मन्त्रो विधीयते ।
तत्र साम प्रयोक्तव्यं कार्य्येषु गुणवत्स्वपि ॥ ११४ ॥
दानं लुब्धेऽपि भेदश्च शङ्कितेष्वपि निश्चयः ।
जड़मुकान्ध वधिरान् तिर्य्यग्योनीन् वयोऽधिकान् ॥११५॥

---

(३) राष्ट्रम् (ख) पुस्तक पाठः ।
(४) स राष्ट्रमिति (ख) पुस्तक पाठः ।
(५) राजानं (अज्ञानाम्) (ग) पुस्तक पाठः ।
(६) उपाविष्ठ (ख)-(ग) पुस्तक पाठः ।
(७) प्रासादश्चारोह्वो गतः ? (ग) पुस्तक पाठः ।
(८) अद्रवं (सद्रवस) मिति (क)-(ख) पुस्तक पाठः ।

---

* (क) पुस्तके धर्म्मार्थ……इत्यादित आरह्वो गत इत्यन्तः सार्द्धश्लोकोऽधिको दृश्यते। (ख)-(ग) पुस्तके तन्नास्ति ।

स्त्री म्लेच्छ व्याधित व्यङ्गान् (९) मन्त्रकाले निषेधयेत् ।
इति संक्षेपतः प्रोक्ता राजनीतिः कियन्मया ॥ ११६ ॥
यत्त्रिवर्गाविरुद्धं स्या द्राजनीति स्तदुच्यते ।

इति श्रीभोजराजीये युक्तिकल्पतरौ नीतियुक्तिः ॥

———*———

## अथ दुर्ग-युक्तिः ।

राज्ञो बलं न हि बलं दुर्गमेव बलम्बलम् (१०) ।
अप्यल्प (११) बलवान् राजा स्थिरो दुर्ग-बलाद्भवेत् ॥११७॥
तथा च,—
एकः शतं योधयति प्राकारस्थो धनुर्द्धरः ।
शतं दश सहस्राणि तस्माद्दुर्गं विशिष्यते ॥ ११८ ॥
अकृत्रिमं कृत्रिमञ्च तत्पुनर्द्विविधम्भवेत् ।
यद्दैवघटितं दुर्गं गिरिनद्यादि-संश्रितम् ॥ ११९ ॥
अकृत्रिम (१२) मिदं ज्ञेयं दुर्लङ्घ्यमरि-भूभुजाम् (१३) ।
प्राकार-परिखारण्य-संश्रयं यद्भवे दिह ॥ १२० ॥
कृत्रिमं नामविज्ञेयं लङ्घ्यालङ्घ्यन्तु वैरिणाम् ॥ १२१ ॥

---

(९) व्यग्रान् इति (ख) पुस्तक पाठः ।
(१०) परम्बलम् इति (ग) पुस्तक पाठः ।
(११) अत्यल्प इति (ग) पुस्तक पाठः ।
(१२) तत् कृत्रिम इति (ख) पुस्तक पाठः ।
(१३) अवनीभूजां इति (ग) पुस्तक पाठः ।

## अथाकृत्रिम दुर्गयुक्तिर्यथा ।

अत्युच्च (१४) विस्तीर्ण-शिरा दुरारोहः सकाननः ।
सजलाशय-सम्भार-भोज्यद्रव्य-समाश्रयः ॥ १२२ ॥
सुख (१५) निःसरणो दुर्गः पर्व्वताख्यो महीभुजाम् ।
नद्यो गभीर विस्तीर्णाश्चतुर्दिक्षु व्यवस्थिताः ॥ १२३ ॥
तन्मध्ये भूप्रदेशो यो नदीदुर्गः स उच्यते ।
यदन्यच्चिरकालीनं दुर्लङ्घ्य विपिनादिकम् ॥ १२४ ॥
तन्मध्ये रचिता भूमि र्दुर्गत्वे(१६)नोपतिष्ठते ।
नवदुर्ग(१७)मिति ख्यातं यथा पूर्व्वं महत्तरम् ॥ १२५ ॥

——*——

## कृत्रिम दुर्ग-युक्तिर्यथा ।

यस्मिन्राज्ये गिरिर्नास्ति नद्यो वा गहनोदकाः ।
तस्य मध्ये महीपालः कृत्रिमं दुर्गमारभेत् ॥ १२६ ॥
गजैरलङ्घ्या विस्तीर्णा गम्भीराः पूर्णवायवः (१) ।
दुर्गत्वेन समादिष्टाः परिखा बहु-यादसः ॥ १२७ ॥
विशाल-शालं सुघनं बहुकण्टक (२) सङ्कुलम् (३) ।
दुर्गत्वेन समादिष्टं विस्तीर्ण-विषमं बलम् ॥ १२८ ॥

---

(१४) अनुच्च इति (ख) पुस्तक पाठः ।

(१५) मुखनिः (भूपनिः) इति (क) पुस्तक पाठः ।

(१६) दुर्ग स्तेन इति (ग) पुस्तक पाठः ।

(१७) नरदुर्ग इति (क) पुस्तक पाठः ।

(१) पूर्णवारयः इति (ख) पुस्तकः पाठः ।

(२) कण्टकि इति (ख) पुस्तक पाठः ।

(३) सङ्कटम् इति (ख) पुस्तक पाठः ।

अधोऽधो बध्यमानोऽपि कन्दरोऽल्प-जलस्रवन्।
द्वन्द्वत्वेन समुद्दिष्टः (४) सुदुर्लङ्घ्यो हि भूभुजाम्।
सर्व्वतः परिखां कृत्वा निवन्धो(५) परि कन्दरम्॥ १२९॥
तज्जल-प्लुतदेशत्वात् जल-द्वन्द्वन्तदुच्यते।
एषामभावे निम्नस्य भूप्रदेशस्य बन्धनात्॥ १३०॥
वर्षास्वल्प-गते वारि (६) जलद्वन्द्वं ततो भवेत्।
एतयोरपि संमिश्रात् संमिश्रं द्वन्द्वमाचरेत्॥ १३१॥
आश्रित्वा कृत्रिमं द्वन्द्वं बलवद्वैरिणोदिशि।
अन्यत्र कृत्रिमद्वन्द्वं कृत्वा नरपति र्वशेत्॥ १३२॥
रथपतिर्यदा वैरो जले (७) द्वन्द्वं तदाचरेत्।
गजाश्व(स्व) नाथश्चेद्वैरो जलद्वन्द्वं (८) तदाचरेत्॥ १३३॥
गिरि-द्वन्द्वं नृपः सेवेन्मुख्यः (९) स्याद् द्विविधो रिपुः।
सर्व्वं हि त्रिविधं युद्धं समासादुपदोच्यते॥ १३४॥
प्रतिराजस्य राज्यान्ते प्रकटे गुप्त एव च।
राज्यान्ते * सैनिकान् रचेत् प्रकटे निवसेत् स्वयम्॥ १३५॥

---

(४) समादिष्टः इति (ख) पुस्तक पाठः।
(५) निवन्ध्यो (निवद्धो) इति (ख) पुस्तक पाठः।
(६) वर्षा स्वल्पं गते इति (ख) पुस्तक पाठः।
(७) स्थलद्वन्द्वम् इति (ग) पुस्तक पाठः।
(८) मुषः स्यात् इति (ख) पुस्तक पाठः।
(९) यस्य स्यात् इति (ग) पुस्तक पाठः।

---

* राज्यान्ते सीमान्ते सैनिकान् चतुर्षु दुर्गोषु च यत्नतो रचेत्। वारिधितटे समुच्च-भूमौ च दुर्गमावश्यकम्। स्वयं नृपो निवसेत् प्रकटे, अमात्य-सैनिक-वेष्टिते।

गुप्ते स्त्री कोषसम्भारं * संरक्षेदिति निश्चयः ॥ १३६ ॥

—— * ——

## अथ सामान्यतो गुणाः ।

तथाहि नीति-शास्त्रम् ।

स प्रवेशापसरणं द्वन्द मुत्तममुच्यते ।
अन्यत्र वन्दिशालेव न तादृग् (द्व)वन्धमाश्रयेत् ॥ १३७ ॥
धनुर्द्वन्द्वं मही द्वन्द्वं गिरि-द्वन्द्वन्तथैव च ।
मनुष्य द्वन्द्व-संसर्गं वरद्वन्द्वश्च तानि षट् ॥ १३८ ॥
अन्ये तु—
न द्वन्द्वं द्वन्द्वमित्याहु र्योद्धृ-द्वन्द्वं प्रकीर्त्तितम् ।
योद्धृ-शून्यं हि यद्युद्धं (१) मृतकाय समं हि तत् ॥ १३९ ॥
अथान्यत्रापि,—

यावत् प्रमाणं नगरं हि राज्ञाम्,
ततो भवेदुत्तम मध्यमान्त्यम् ।
त्रिंशच्च (२) लक्षाष्टगुणोत्तरेण ;
विदेशजानां धरणीपतीनाम् ॥ १४० ॥

---

(१) यद्द्वम् इति—यद्द्वन्द्वम् (ख)—(ग) पुस्तक पाठः ।

---

* समासन्ने संग्रामे सुगुप्ते स्थाने स्त्रीकोषसम्भारान् [ रत्नादि द्रव्याणि ) यत्नतो रक्षेत् । अथवा नृपान्तःपुरे एव तानि रक्षेदिति ; राजधानी-प्रत्यासन्ने समरे रिपौ, असम्भावित जये च तान्सूर्णं त्यक्त्वा निरुपद्रं स्थानान्तरं गच्छेत् ।

गर्गस्तु—

यदन्यद्द्विविधं द्वन्द्वं प्रोच्यते धरणीभुजाम् ।
ताभ्यामेवातिरिच्येत (३) मन्त्रयुद्धं (४) विशेषतः * ॥१४१॥
अन्येषु दैवाधीनेषु मन्त्रद्वन्द्वाज्जये नृपः ।
मन्त्रद्वन्द्वे हि भिन्ने हि न चान्यत्कार्य्य (५)कारणम् ॥१४२॥

भोजस्तु,—(†)

यदेव वैरि-दुर्लङ्घ्यं विस्तीर्णं विषमञ्च तत् ।
स प्रवेशापसरणं तद्द्वन्द्व(६)मुत्तमं विदुः ॥ १४३ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ द्वन्द्वयुक्तिः ॥

---

(३) अतिरिक्तं तत् इति (ख) पुस्तक पाठः ।
(४) मन्त्रद्वन्द्वं इति (ग) पुस्तक पाठः ।
(५) कार्य्यकारकं इति (ग) पुस्तक पाठः ।
(६) तद्युद्धमुत्तमं इति (ग) पुस्तक पाठः ।

---

* "उपायान् षड्गुणं मन्त्रं शत्रोः स्वस्यापि चिन्तयेत् ।
धर्म्मयुद्धैः कूटयुद्धैः हन्यादेव रिपुं सदा ॥"
"मन्त्रेरित-महाशक्ति-बाणाद्यैः शत्रुनाशनम् ।
मान्त्रिकास्त्रेण तद् युद्धं सर्व्वयुद्धोत्तमं स्मृतम् ॥"—इति शुक्रनीतौ ।
—अत्रोपायान् सामादीन्, षड्गुणान् सन्ध्यादीन् ;
धर्म्मयुद्धैः कूटयुद्धैर्व्वा सदा शत्रून् संहन्यादेव ।

† भोजस्त्विति—ग्रन्थ प्रणेतृतोऽन्यः कश्चन नीतिनिपुणः प्राचीनो भोजराजोप्यासीदित्य-नुमीयते, एतदवतारिकायां द्रष्टव्यम् ।

## अथ नगर निर्म्माणादि-कालः ।

स्थिरराशि-गते भानौ चन्द्रे च स्थिर-भोदये * ।
शुभे काले दिने चैव नगरं कारयेत् नृपः ॥ १४४ ॥

——*——

## अथास्य लक्षणम् ।

भविष्योत्तरे,—
दीर्घं वा चतुरस्रं वा नगरं कारयेन्नृपः ।
तद्द्वयं (१) वहुलम्बापि कदाचिदपि कारयेत् ॥ १४५ ॥
दीर्घः पादैक प्रसरः चतुरस्रः समोचितः ।
त्रिभिः पादैः समं त्र्यस्रं वर्त्तुलं वलयाकृतिः ॥ १४६ ॥
दीर्घं स्याद्दीर्घकालाय सुखसम्पत्ति-हेतवे ।
चतुरस्रं चतुर्व्वर्ग(२) फलाय पृथिवी-पतेः ॥ १४७ ॥

---

(१) तद्रस्वं इति (ख) पुस्तक पाठः ।
(२) चतुर्व्वन्ध (ङ) इति चतुर्व्वङ्ग इति (ख)—(ग) पुस्तक पाठः ।

---

"आदित्ये युक्कर्कि-क्रियमिथुनघटालिस्थिते सत्समेतैः,
केन्द्राष्टान्त्ये रसौम्यैस्त्रिभवरिपुगतैः खस्थिरप्राप्यलग्ने ।
भेषु स्वाराद्‌ विशाखादिति फणिदहनीयेतरेष्वर्कशुद्धौ ;
वेश्मारम्भः शुभः स्यात् सुतिथि शुभविधौ भौमसूर्य्येतराह्ने ॥"
अत्र वेश्म इत्युपलक्षणम्, तेन सर्व्ववास्तुकार्य्यं वोध्यम् ।

—इत्यादीनि ज्यौतिषीय शिल्पशास्त्रीय प्रमाणानि मुहूर्त्तचिन्तामणि-वृहत्पराशर-मूल स्तम्भशास्त्र-कुमारवास्तुशास्त्र-पराशरीय शिल्पशास्त्र-ज्योतिस्तत्त्व-शुक्रनीति-वराहमिहिरीयादिषु च सन्दर्भेषु अनुसन्धेयानि ।

त्र्यस्रं विशक्ति-नाशाय वर्त्तुलं बहुरोगकृत्।
राज्ञः स्वहस्तैर्द्दशभी राजहस्त उदाहृतः॥ १४८॥
राजहस्तैस्तु दशभी राजदण्ड उदाहृतः।
राजदण्डैश्च दशभी राजच्छत्रमुदाहृतम्॥ १४९॥
राजछत्रैस्तु दशभी राजकाण्ड उदाहृतः।
राजकाण्डैश्च दशभी राजपुरुष (३) उच्यते॥ १५०॥
राज-प्रधानी (तु) कथिता दशभी (४) राजपुरुषैः।
राजधानी दशगुणा (५) राजक्षेत्रमुदाहृतम्॥ १५१॥
सप्तैव परिमाणानि प्रोक्तानि पूरपत्तने।
भय-श्री भोगसम्पत्ति-मृत्युकीर्त्ति-सुखार्थिनाम्॥ १५२॥
राज-क्षेत्रेण नृपतिः * पूर-पत्तनमारभेत्।
लक्ष्मीर्जयः क्षमा सौख्यं पश्चत्वं भङ्ग एव च॥ १५३॥
समृद्धिर्व्वित्त-नाशश्च मङ्गलश्च वलक्षयः।
साम्राज्यं भोगसम्पत्तिरिति षोड़श-कीर्त्तिताः॥ १५४॥
यथार्थ संज्ञा † नगरी मुनिना तत्त्ववेदिना।

---*---

## अथ वसति-लक्षणम्।

विस्तीर्णमध्यो नगरः सममर्द्द चतुष्पथः।
प्रपा मण्डप कासार-काननाद्युपशोभितः॥ १५५॥

---

(३) पूरुष इति (क) पुस्तक पाठः।
(४) स सती इति (क) पुस्तक पाठः।

---

* पूरम्-राजान्तःपूरी। पत्तनं-पुटभेदनम्।

† मान-नियमस्तु यथात्र दृश्यते न तथा विश्वकर्मप्रकाशादौ, शुक्रनीतिसारे, वृहत्काश्यपीये, पराशरीय शिल्पादौ च।

ईशान-पूर्व्व-प्लवनः मध्यस्थान-समुन्नतः ।
रोगकृद्दक्षिण-प्लावी धनदश्चोत्तर-प्लवः ॥ १५६ ॥
पश्चिम-प्लवनो ग्राम सुख-सम्पत्ति-नाशनः ।
मध्ये निम्नो दरिद्रत्वं प्रान्ते निम्नः सुखं वहेत् ॥ १५७ ॥
त्रिपथाद्राजदण्डेषु राज-च्छत्रे चतुष्पथे ।
राजकाण्डे मण्डपिका सरसी राज-पूरुषे ॥ १५८ ॥
राजधान्यन्तरे हट्टं(ट्ट) राजचैत्ये च दुग्धकम् (५) ।
मध्ये साधुसृदुभिषक् दैवज्ञान् वासयेदथ ॥ १५९ ॥
प्रान्ते म्लेच्छान्त्यज-क्षुर वीर सैनिक कर्कशान् ।
गोपुरे सैनिकान् वीरान् मन्त्रिणो भवनान्तिके ॥ १६० ॥
मन्त्रिणः (६) प्रतिवेशित्वं कदाचिदपि नाचरेत् ।
तयोर्हि प्रतिवेशित्वे दुर्मन्त्रोऽपि च जायते ॥ १६१ ॥
नियोगिनां स्थितिं कुर्य्यान्नगरे चान्तरेऽन्तरा ।
नियोगि-मन्त्रिणोर्दृष्टिः (७) कार्य्यध्वंसाय कल्पते ॥ १६२ ॥
मन्त्रिणोऽदूरवसतिः (८) कर्म्म कुर्य्यान्न सत्त्वरम् (९) ।
नवकं (१०) नवकद्वारं नैकद्वारं समारभेत् ॥ १६३ ॥
न विषमं नाविषमं न समं नासमन्तथा ।
न मध्ये हस्तिनां वासो न प्रान्ते वाजिनान्तथा ॥ १६४ ॥

---

(५) दुग्धकम् ? ( दुग्धकम्, दुन्नकम् ) इति (ख)-(ग) पुस्तक पाठः ।
(६) मन्त्रिणोः इति (ख) पुस्तक पाठः ।
(७) —र्दृष्टः इति (ख) पुस्तक पाठः ।
(८) दूरवसतिः इति (ग) पुस्तक पाठः ।
(९) निसत्वरं इति (ख) पुस्तक पाठः ।
(१०) नरकं इति (ख) पुस्तक पाठः ।

नादूरे पत्ति-वसतिं न दूरे साधु-मन्त्रिणोः ।
न वर्णिनो नाधिकाङ्गान् न हीनान् नच दुष्टतान् ॥ १६५ ॥
न देशान्तरगान् नीचान् न महाव्याधि-पीड़ितान् ।
स्वपुरे रक्षयेद्राजा यदीच्छेदात्मनः श्रियम् ॥ १६६ ॥
न भृत्य-शाला (११) स्वपुरे न चाध्ययन-शालिका * ।
तत्र शत्रुचरःस्थित्वा सर्व्वं वेत्ति बलाबलम् ॥ १६७ ॥
भोजेनापि नगरयुक्तिरन्यथोक्ता ॥ १६८ ॥
तद्यथा,—
राज(ज्ञः)-स्वहस्तैः कोट्या च राजचेत्रमुदाहृतम् ।
एतेन परिमाणेन भूपः पत्तनमारभेत् ॥ १६९ ॥
यस्मिन् लग्ने भवेज्जन्म महीभर्त्तुर्महीतले ।
तद्दण्ड-राजचेत्रेण राजा पत्तनमारभेत् ॥ १७० ॥

एतेन मेषादिषु पादोन-चतुर्दण्डादिषु मानेषु जातस्य नृपतेः चतुर्भी राजचेत्रैः पुरपत्तनमिति भोजाभिप्रायः । शेषं समानम् ॥१७१॥

पराशरसंहितायान्तु मानन्तदेव, किन्तु युक्तिरन्या । तद्यथा,—
यस्य ग्रहस्य जायेत दशायां नृपतिर्भुवि ।
दशाब्द-संख्यितैराज-चेत्रैर्नगरमारभेत् ॥ १७२ ॥

——*——

## अथ दोषगुणौ ।

परलग्नदशामान-मिते पर-कृतेऽथवा † ।
नगरे यो वसेद्राजा सोऽचिरान्मृत्युमाप्नुयात् ॥ १७३ ॥

---

(११) न नृत्यशाला इति (ख) पुस्तक पाठः ।

* अध्ययनशालिका ब्रह्मपाठागारः महाविद्यालयो वा ।

† राज्ञो निजस्य दशालग्न-ग्रह-शुद्धिषु नगरं निर्म्माय तत्र वसेत् । परकीय दशालग्न-मानादिषु तथा परार्थनिर्म्मित-नगरेनैव वसेत् । स्वीयजन्मलग्नादि-सम्बन्धाभावात् । अतः-पर निर्म्मित-नगरे स्व-प्रतिकूल-जन्मलग्नादौ वासोऽवैधः ।

परदारेषु यो दोष स्तथा पर-पुरीषु च ।
यदिच्छेच्छाश्वतीं लक्ष्मीन्तदेतत् उभयन्त्यजेत् ॥ १७४ ॥
निज-लग्नं द्वग्रामान-मिते निजकृते नरे (१) ।
नगरे यो वसेद्राजा लक्ष्मीस्तस्यैव शाश्वती १७५ ॥
इति भोजराजीये युक्ति कल्पतरौ नगरी युक्तिः ॥

—*—

## अथ वास्तुयुक्तिः ।

### तत्रस्थान-निर्णयः ।

नदी श्मशान शैलानां वनस्य निकटे तथा ।
न वास्तुकर्म्म कुर्व्वीत न द्वन्द्व-नगरान्तयोः ॥ १७६ ॥

### तत्र दिङ्निर्णयः ।

राक्षसानिल-वह्नीनां यमस्य दिशि वेश्मनः ।
नारम्भं कारयेद्राजा भीरुग्दाह-क्षयप्रदम् ॥ १७७ ॥
तथाहि,—
भोगः कीर्त्तिर्धनं रोगः स्थिरता च भयङ्करः ।
दाह इत्येष कथितो दिशि वास्तु-फलोद्भवः ॥ १७८ ॥
भोजे च,—
यल्लग्ने जायते राजा तस्य लग्नस्य यः पतिः ।
या दिक् तस्य नृपस्तस्यां वास्त्वारम्भं समाचरेत् ॥ १७९ ॥

---

(१) नवे इति (ख) पुस्तक पाठः ।

एवञ्च कुजादि-पतिके मेषलग्ने
जातस्य नृपतेः कुजादि-पतिकायां
दक्षिणस्यामपि वास्तुर्न दुष्यति इति ॥ १८० ॥

पराशरस्तु,—
यद्दशा-जनितो राजा वास्त्वारम्भस्तु (१) तद्दिशि *।
एतेन सूर्य्यादि-दशा जनितस्य नृपतेः
पूर्व्वादि दिक्षु वास्तु-करणम्।
तेन शुक्रदशायां जातस्याग्नेय्यामपि न दुष्यति ॥ १८१ ॥

अथ लक्षणम्,—

वास्तुं कुर्य्यान्महीपालः समं सुस्निग्धमृत्तिकम्।
प्रागुदक्-प्लवनं † रम्यं रम्य-वृक्षोपशोभितम् ॥ १८२ ॥
लक्ष्मीर्दाहः क्षयो भीतिधन-नाशोऽर्थ-(२) शून्यता।
सम्पद्वृद्धिरिति प्रोक्तं पूर्व्वादि-ककुभं फलम् ॥ १८३ ॥

तथाहि प्लवनमन्यत्,—

जन्मलग्नेन दिक् पश्चाद् राज्ञां वास्तु-पुरोमतः।
एतेन सूर्य्याधिपतिः तुलालग्ने जातस्य नृपतेः सूर्य्याधिपतेः
पूर्व्वस्याः पश्चात् पश्चिम-प्लवो हि न दुष्यति ॥ १८४ ॥

---

(१) वास्त्वारम्भश्च इति (क) पुस्तक पाठः।
(२) अर्थशून्यता इति (ख) पुस्तक पाठः।

---

* दशालग्नादिकं वृहत्पराशर-वृहज्जातकाद्यनुसारेण ज्ञेयम्।
† पूर्व्वनिम्नमुत्तरनिम्नं वा वास्तु कार्य्यम्।

अन्ये तु,—

यद्दशा जनितो राजा तद्दिगग्रः प्लवो मतः।
एतेन गुरुदशा-जातस्य नृपतेर्दक्षिणप्लवो न दुष्यति ॥ १८५ ॥

अन्यत्र तु,—

ब्रह्म-क्षत्रिय-विट्-शूद्राः पूर्व्वादि-दिग्युगे क्रमात्।
वास्तु-प्लवनमिच्छन्ति निजसम्पत्ति-हेतवे ॥ १८६ ॥

नीतिशास्त्रे च,—

वास्तुकर्म्म नृपः कुर्य्यात् * बलवैरिणो दिशि।
दीर्घां वा चतुरस्रां वा वास्तु-भूमिं महोच्छ्रिताम्।
एतयोर्लक्षणं तद्वत् फलञ्च नगरे यथा ॥ १८७ ॥

अथ मानम्।

राजकाण्डेन † नृपतिर्वास्त्वारम्भं समाचरेत्।
जयोभङ्गः सुखं दुःखं प्रीतिर्भीश्च चलः स्थिरः ॥
इत्यष्टौ वास्तुनामानि राजकाण्डैरनुक्रमात् ॥ १८८ ॥

अन्यत्र च,—

जन्मलग्ने महोभर्त्तुः कुण्डयोरन्त एव हि।
राजकाण्डैस्तु तावद्भिर्वास्तुं कुर्य्यान्महोपतिः ॥ १८९ ॥
सुदर्शां(६)च्छन्द-संख्येन राजपट्टेन भूपतेः।
वास्तुकर्म्म-समारम्भो धनधान्य-जयप्रदः ॥ १९० ॥

---

(६) स्वदशा दर्शाच्छन्द इति (ग) पुस्तक पाठः।

---

* नगरप्रकरणोक्त-परिमाणमत्र विज्ञेयम्।

† गृह वास्तु-नगर-हर्म्म्यादीनामारम्भे जन्मलग्न-ग्रह-तिथि-भयोगादीनां शुद्धिः सर्व्वत्र समैव ज्ञेया, एवं दुर्गं सेनानिवासादौ च तथैव बोध्यम्।

एतयोरपि पूर्व्ववद् व्याख्यानम्।

राजच्छत्रेण कुत्रापि वास्तुपत्तनमिष्यते।
तस्यापि पूर्व्ववन्मानं तन्मान (७) मिति भाषितम्॥ १८१॥

अथ तत्र गुणदोषौ,—

परनिर्म्मित-वास्तुस्थो न तिष्ठति चिरं नृपः।
न सुखाय न धर्म्माय तत्तस्य भुवि जायते॥ १८२॥

एवमन्यत्रापि,—

राजान्य (८) वीर्य्य-प्रत्याशो पर वास्तुकृत-स्थितिः।
सुखाय नो भवेन्नृणां यथा पर-गृहे ग्रहः॥ १८३॥

यः स्वनिर्म्मित-वास्तुस्थो निज-लग्नादि-संयुतः।
विचारित पुरो-राजा सुचिरं सुखमश्नुते॥ १८४॥

अन्यत्रापि,—

राजा स्वबाहु-वीर्य्याढ्यः निजनिर्म्मित-वास्तु भाक्।
स चिरं तनुते सौख्यं स्वगृहस्थो ग्रहो यथा॥ १८५॥

अथ वास्त्वारम्भ-कालः।

वर्षान्ते (८) ऽभ्युदिते शुक्रे केन्द्रे सुरगुरौ शुभे।
वास्तु-कर्म्म समारम्भः शुक्रचन्द्रार्क-भूमिजे॥ १८६॥

गृहयुक्तौ (१०) यः समयः कर्त्तव्यस्तत्र वै शुभे।
वास्त्वारम्भः कार्य्यः शुभसम्पत्ति-कामिना राज्ञा॥ १८७॥

इति श्री भोजराजीये वास्तुयुक्तौ (११) वास्तूद्देशः।

---

(७) तद्देशमिति (क) पुस्तक पाठः।
(८) राजन्य-वीर्य इति (क) पुस्तक पाठः।
(९) वर्षान्ते इति (ख) पुस्तक पाठः।
(१०) गृहयुक्तौ इति (ख) पुस्तक पाठः।
(११) वस्तूद्देशः इति (ख) पुस्तक पाठः।

अन्येषां यथा,—यदाह वास्तुकुण्डल्याम्—

स्वामिहस्तैश्चतुर्भिः स्यात् कुण्डस्तेनैव मापयेत् ।
क्षेमं भयङ्करो भव्यः शोककृद्विजयः शुचिः ।
वंशकृत्पापकारी च विकारी शोभनः शिवः ॥ १९८ ॥
कुणपः कामदो धूम्रो (१२) धौम्यो धनहरस्तथा ।
धनदः सुखकृ(द्ध)च्चेति वाच्योऽ(१३)ष्टादशकीर्त्तिताः ॥१९९॥

तद्‌यथा,—

आयाम परिणाहाभ्यां योऽङ्क(१४)पिण्डोऽभि जायते ।
उनविंश-हृते (१५) भागे शेषेणैता यथाक्रमम् ॥ २०० ॥
क्षेमे सर्व्वार्थ-सिद्धिः स्यात् (१६) भयकारि-भयङ्करः ।
भव्यो भोगं प्रकुरुते शोककृत् (१७) वन्धुनाशनम् ॥ २०१ ॥
विजयः कुरुते वृद्धिं शुचिः सर्व्व-सुखं वहेत् ।
वंशकृत् कुरुते वंशं पापकारी कुलापहः ॥ २०२ ॥
विकारी कुरुते दुःखं शोभनः शुभमावहेत् ।
शिवः सर्व्वार्थसिद्धिः स्यात् कुणपः सर्व्वनाशनः ॥ २०३ ॥
कामदोऽभीष्ट-लाभः स्याद् धूम्रो दहति सर्व्वशः ।
धौम्ये धर्म्ममतिः सौख्यं दुःखं धनहरो भवेत् ॥ २०४ ॥

---

(१२) धृष्टौ धै इति (ख) पुस्तक पाठः ।
(१३) वाटाऽष्टादश इति (ग) पुस्तक पाठः ।
(१४) योऽच्चः इति (ग) पुस्तक पाठः ।
(१५) कृते इति (ख) पुस्तक पाठः ।
(१६) संसिद्धिः इति (ख) पुस्तक पाठः ।
(१७) शोकहृत् इति (ग) पुस्तक पाठः ।

धनदो धन-लाभ स्यात् सुखकृत् सुखकारकः ।
इति प्रोक्तोऽतिसंक्षेपाद्वास्तु-लक्षणसंग्रहः ॥ २०५ ॥

भोजस्तु,—

दण्डमानस्तथैव किन्तु युक्तिरन्या ।
ख (१८) दशाब्दतो द्विगुणै स्तैः शुभावहश्चतुरस्र एव
नव वास्तु शिष्यते ॥ २०६ ॥

किन्तुलग्न-(१९) दण्डमित-लग्नमित-(२०) दण्डसम्मितः ।
प्रकरोति वास्तुरति सौख्य-सम्पदम् ॥ २०७ ॥

उषरा वालुका हित्वा (२१) त्रयमेतद्विनिन्दितम् ।
त्रिकोणो वर्त्तुलो दीर्घो यवमध्यो बृहन्मुखः ॥ २०८ ॥

तथा डमरुरूपश्च सर्पाकार स्तथैव च ।
छिन्नो भिन्नो मध्यनिम्नो व्यजनाभश्चतुष्पथः ॥ २०९ ॥

त्रिपथो जनदोषो च (२२) वृक्षदोषो तथापरः ।
गजशुण्डाकृतिश्चैव यो द्रवः परिकीर्त्तिताः ॥ २१० ॥

वास्तु-खण्डे महादोषा ज्ञेयास्तस्माद्विचक्षणैः ।
चतुरस्रः शुभो दीर्घस्तस्य (२३) प्रान्तः समाश्रितः ॥
दोषैर्विहीनो विज्ञेयो वास्तुखण्डः सुखावहः ॥ २११ ॥

इति श्री भोजराजीये युक्तिकल्पतरौ वास्तुयुक्तिः ।

---

(१८) सुदशाब्द इति (क) पुस्तक पाठः ।
(१९) किमुलग्न इति (ख) पुस्तक पाठः ।
(२०) दण्डलग्नमितदण्ड इति (ख) पुस्तक पाठः ।
(२१) छित्वा इति (ग) पुस्तक पाठः ।
(२२) दोषाच इति (ग) पुस्तक पाठः ।
(२३) तुल्य इति (ख) पुस्तक पाठः ।

## अथ तत्र कालनिर्णयः * ।

वैशाख-श्रावणाषाढ़-मार्गफाल्गुन कार्त्तिकाः ।
सुप्रशस्ता गृहारम्भे पत्नीपुत्र-समृद्धिदाः ॥ २१२ ॥
शुक्लपक्षे भवेत् सौख्यं कृष्णे तस्करतोभयम् (२४) ।
आदित्य भौमवर्ज्जन्तु सर्व्वे वाराः शुभावहाः ॥ २१३ ॥
तथान्यत्र,—
पूर्णिमाद्यष्टमीं यावत् पूर्व्वस्यां वर्ज्जयेत् गृहम् ।
उत्तरस्यां न कुर्व्वीत नवम्यादि-चतुर्दशीम् ॥ २१४ ॥
अमावस्याष्टमीं यावत् पश्चिमस्यां विवर्जयेत् ।
नवम्यादि तथायाम्यां यावच्छुक्ला चतुर्दशीम् ॥ २१५ ॥
वज्रव्याघातशूले च व्यतीपातातिगण्डयोः ।
विस्कुम्भ गण्डयोश्चैव गृहारम्भं न कारयेत् ॥ २१६ ॥
आदित्यद्वयरोहिणी मृगशिरो ज्येष्ठाधनिष्ठोत्तराः,
रेवत्याथ मघानुराधहरिभिः शुद्धैः स्व-भावादिभिः ।
सौम्यानां दिवसेऽथ (२५) पापरहिते योगैर्विरिक्ते तिथौ ;
विष्टित्यक्तदिने वदन्ति मुनयो वेश्मादि-कार्य्यं शुभम् ॥२१७॥
मत्स्यपुराणेऽपि;—
चन्द्रादित्यवलं लब्धा लग्नं शुभ-निरीक्षणम् ।
स्तम्भोब्रह्मादिकर्त्तव्यो (२६) ऽन्यत्रतु विवर्ज्जयेत् ॥ २१८ ॥

---

(२४) कृष्टे च भरतो इति (क) पुस्तक पाठः ।
(२५) प्राण इति (ग) पुस्तक पाठः ।
(२६) ब्रह्मादि कर्त्तव्यम् इति (क) पुस्तक पाठः ।

---

* एतद्विषये प्रमाणान्तराणि—भोजराजीय राजमार्त्तण्डे, ज्योतिस्तत्त्वे, वराहमिहिरीये, शिल्पसन्दर्भे चानुसन्धेयानि ।

अश्विनी रोहिणी मूल-मुत्तरात्रयमैन्दवम् (३)।
स्वातिर्हस्तानुराधाच वास्तु-कर्म्मणि शस्यते ॥ २१९ ॥
तथा च,—
त्रिभिस्त्रिभिर्वेश्मनि कृत्तिकाद्यैः,
अशेष-पुत्राप्ति-धनानि शोकाः (४)।
शत्रोर्भयं राजभयञ्च मृत्युः ;
सुखं प्रवासश्च नवप्रभेदाः ॥ २२० ॥
नाशं दिशन्तिमकरालिकुलिर-लग्ने,
मेषे घ(ध)टे धनुषि कर्म्मसु दीर्घसूत्रम्।
कन्याभषेमिथुनके ध्रुवमर्थलाभोः—
ज्योतिर्व्विदः कलस-सिंह-वृषेषु वृद्धिम् ॥ २२१ ॥
लग्नेर्के (५) वज्रसंपातः कोषहानिश्च शीतगौ।
मृत्युर्व्वसुन्धरा-पुत्रे चन्द्रजे शुभसम्पदः ॥ २२२ ॥
जीवे धर्म्मार्थकामाश्च सुतोत्पत्तिस्तु भार्गवे।
शनैश्चरे तु दारिद्रं राहौ वस्तं (६) प्रवर्द्धते (७) ॥ २२३ ॥

---

## अथ प्रवेश-कालः।

शुभैर्द्वादश-केन्द्रगैर्निधनगैः पापै स्त्रिषष्ठायगैः,
लग्ने केन्द्रगतेऽथवा सुरगुरौ दैतेय पूज्येऽपिवा।

---

(३) मैन्दवम् इति (क) पुस्तक पाठः।
(४) लोकाः इति (ख) पुस्तक पाठः।
(५) लग्नेऽर्कः इति (ग) पुस्तक पाठः।
(६) वस्तु इति (ख) पुस्तक पाठः।
(७) प्रवर्त्तते इति (ख) पुस्तक पाठः।

सर्व्वारम्भफल-प्रसिद्धिरुदये राशौ च भर्त्तुः शुभे ;
स्वग्राम्य-स्थिरतोदये च भवनं कार्य्यं प्रवेशोऽपिवा ॥२२४॥
पौष्णे धनिष्ठाऽथ वारुणेषु, स्वायम्भुवेऽर्के त्रिषुचोत्तरेषु ।
अक्षीण चन्द्रे शुभवासरेच तथा विविक्ते च गृहप्रवेशः ॥२२५॥
तिथिर्वारश्च लग्नादि समारम्भे यथोदितम् ।
प्रवेशेऽपि(८) गृहं स्यात्तु(९) तथा ज्योतिर्व्विदो जनाः ॥२२६॥

---

## अथ द्वारम् ।

नैकद्वारं वास्तुखण्डं न चतुर्द्वारमारभेत् ।
एकद्वारं दुःसरणं चतुर्द्वारं दुरापहम् ॥ २२७ ॥
त्रि-द्वारमेव नृपतेर्वास्तुकर्म्म प्रशस्यते ।
द्वे मुख्ये तत्र चान्यत्स्यादमुख्यमिति निर्णयः ॥ २२८ ॥
राजद्वारन्तु (१०) तत्रैकं यमद्वारन्तथापरम् ।
अपद्वारं तथान्यत्स्यादिति द्वारस्य निर्णयः ॥ २२९ ॥
ब्रह्म-क्षत्रिय-वैश्यानां प्रागुदक् पश्चिमैः क्रमात् ।
मुख्यद्वारं दक्षिणस्य परन्तस्यापि दक्षिणे ॥ २३० ॥
बलवद्वै वैरिमुख्यं द्वारमित्यस्य सम्मतम् ।
राज-द्वारेऽन्य भूपानां शिष्टानां वा प्रवेशयेत् ॥ २३१ ॥
यात्रा प्रसाद-पर्व्वाणि राजद्वारेषु कारयेत् ।
यमद्वारेच्छिदाकर्म्म द्विषताञ्च प्रवेशनम् ॥ २३२ ॥

---

(८) प्रवेशोऽपि इति (क) पुस्तक पाठः ।
(९) स्यात्तुस्तथा इति (क) पुस्तक पाठः ।
(१०) द्वारस्तु इति (ख) पुस्तक पाठः ।

निःसारणं मृतानाञ्च दुष्टानाञ्च निवन्धनम् ।
अपद्वारेऽवरोधस्य गमनागमन-क्रिया ॥
राज्ञो विलास-यात्रा च मर्म्मज्ञस्य प्रवेशनम् ॥ २३३ ॥

——— * ———

## अथ प्राचीर-निर्णयः ।

गजैरभेद्या मनुजैरलङ्घ्याः ।
प्राचीरखण्डा नृपतेर्भवन्ति ॥ २३४ ॥
राजदण्डोन्नताः सर्व्वे प्राचीरा पृथिवीभुजः ।
विंशतिस्तेषु पश्चाग्रे पार्श्वयोः पञ्चपञ्च च ॥ २३५ ॥
पश्चात् पञ्च च विज्ञेयाः प्राचीराः पृथिवीभुजः ।
सर्व्व-प्रान्ते त्वावरणो नाम प्राचीर उच्यते ॥ २३६ ॥
प्रति प्राकार(११)संस्थानं द्वारं नाभिमुखस्थितम् ।
तत्र जयाख्यस्य दीर्घस्य वास्तुखण्डस्य निर्णयः ॥ २३७ ॥
तद्‌यथा,—
राज-छत्रान्तरे पञ्च राजद्वारे महीपतेः ।
राजदण्डत्रये सार्द्धे यमद्वारे प्रतिष्ठिताः ॥ २३८ ॥
अद्वारे (१२) राजदण्डार्द्धे प्राचीराः पृथिवीपतेः ।
एवं व्यवस्थिते स्थाने मध्यमेतद्धि तिष्ठति ॥ २३९ ॥
राजच्छत्रद्वयं सार्द्ध मायामे जय-वास्तुनि ।
परिणामे(हे) पञ्चराज-दण्डास्तिष्ठन्ति मध्यतः ॥ २४० ॥

---

(११) प्रति प्रकार इति (ख)-(ग) पुस्तक पाठः ।
(१२) अत्राद्वारे इति एतत् सन्दर्भस्थः पारिभाषिकः पाठार्थोऽज्ञेयः ।

राजपट्टाभिधानेन स्थानमेतन्निगद्यते ।
अस्मिन् गृहं नृपः कृत्वा सुचिरं सुखमश्नुते ॥ २४१ ॥
अस्मामाद्भ्रतो राजा योऽन्यत्र गृहमारभेत् ।
सोऽचिरान्मृत्युमाप्नोति रोगं शोकभयन्तथा ॥ २४२ ॥
यमदण्डोदयदण्डौ कोणादिति (१३) रुपप्लवः * ।
ये चान्ये वास्तुदोषाः स्युः स्थाने दोषाश्च ये पुनः ॥ २४३ ॥
नस्पृश्यते (१४) राजपट्टे स्तैः सर्पैर्गरुड़ो यथा ।
द्विगुणादि रतोऽपि स्यात् क्रमाङ्गङ्गादि वास्तुषु ॥
राजच्छत्रमितेऽप्येवं प्राचीरे गुणदोषकौ ॥ २४४ ॥

---*---

## अथ जयाख्यस्य चतुरस्रस्य वास्तुखण्ड-निर्णयः ।

राज द्वारे हि प्राकारा राजच्छत्रान्तरे मताः ।
यमद्वारे † सार्द्धराज-छत्रान्ते रचयेन्नृपः ॥ २४५ ॥
अपद्वारे राजदण्डं जित आरम्भिताः पुनः ।
अद्वारे भूपतेस्तस्य राज-दण्ड-(१५) त्रयान्तरे ॥ २४६ ॥

---

(१३) कैनो ? इति (क)-कोनो इति (ख) पुस्तक पाठः ।
(१४) स स्पृश्यते इति (क), स्पृश्यते इति (ख) पुस्तक पाठः ।
(१५) राजदण्डात्त्रयान्तरे इति (ग) पुस्तक पाठः ।

---

* अत्रेति पदेन "अति वृष्टिरनावृष्टिः शलभा मूषिकाः खगाः ।
प्रत्यासन्नाश्च राजानः षड़ेते ईतयः स्मृताः" ॥
इति ज्योतिःशास्त्रीयवचनोपात्तं ज्ञेयम् ।

† यमद्वारेति एतद्ग्रन्थस्थः पारिभाषिकार्थो ज्ञेयः ।

एवं व्यवस्थिते स्थाने मध्यमे तत्प्रदृश्यते।
आयामे राजच्छत्राणि चत्वारिपरिणाहतः॥ ४७॥
राजच्छत्रैकमानेन राज-दण्ड उदाहृतः।
अयञ्च सप्तमो भागो वास्तोर्भवति शोभनः॥ २४८॥
अस्मिन् गृहं नृपः कृत्वा सुचिरं पाति मेदिनीम्।
अस्मिन् विजय-वृद्धिश्च सौख्यञ्च समवाप्नुयात्॥ २४९॥
यो राजा दम्भतो(१)ऽन्यत्र वेश्मारम्भं समाचरेत्।
य उक्तो राजदण्डोऽयं तस्येदं स्थानपञ्चकम्॥ २५०॥
गजो व्याघ्रश्च सिंहश्च मृगो भृङ्गो यथाक्रमम्।
सिंहे सिंहासनस्थानं व्याघ्रेस्याद्द्वारमन्दिरम्॥ २५१॥
गजे यात्रालयं कुर्य्यात् मृगे केलि-निकेतनम्।
भ्रमरेऽन्तःपुरं (२) कुर्य्यात् क्रमेण पृथिवीपतेः॥
तेन मध्यममेव (३) सिंहासनं दीर्घस्य च चतुरस्रकैः॥२५२॥
तत्र भविष्योत्तरे,—
मेषादि-चन्द्रे जातस्य नृपतेः स्यु रनुक्रमात्।
द्वादशैव गृहान् वच्ये तेषां लक्षणमग्रतः॥ २५३॥
सुनन्दः सर्व्वतो भद्रो भव्यो नान्दीमुखस्तथा॥
विनोदश्च विलासश्च विजयो विमलस्तथा॥
वङ्गः (४) केलिर्जयो वीरो द्वादशैते प्रकीर्त्तिताः॥ २५४॥

---

(१) राजा दण्डतो इति (क) पुस्तक पाठः।
(२) भ्रमरेऽन्तःपुरे इति (ख) पुस्तक पाठः।
(३) तेन मध्यमेन इति (ख) पुस्तक पाठः।
,, मध्यममेव इति (ग) पुस्तक पाठः।
(४) रङ्ग इति (ग) पुस्तक पाठः।

अथैषां लक्षणानि।

यदत्रैवोच्यते (५) मानं तस्य तेनैव कल्पना *।
राज्ञः स्वहस्तमेकन्तु दीर्घे सर्व्वत्र निक्षिपेत् ॥ २५५ ॥
आयामेन सुन्दरः स्याद्राज-हस्तैश्च पञ्चभिः।
परिणाहे चतुर्भिश्च राज-हस्तैः प्रतिष्ठितः ॥ २५६ ॥
अस्याधिदेवता भौमो रक्ततोयं (६) वसुन्धरा।
द्वाराणि विंशतिश्चास्य रक्त-चित्रावृतानि च ॥ २५७ ॥
रक्तपट्टावृतो गेहः सकलार्थ-प्रसाधकः।
अत्र स्थित्वा महीपालः सुचिरं पाति (७) मेदिनीम् ॥२५८॥
दीर्घ-एकपञ्चाशत् ५१, प्रस्थ-चत्वारिंशत् ४०।

इति सुन्दरः।

द्वौ राजहस्तावायामे परिणाहे तथैव च।
इत्ययं सर्व्वतोभद्रः शुक्रश्चास्याधिदेवता ॥ २५९ ॥
दानवा रक्षकाश्चैव पूज्यास्ते चात्र यत्नतः।
चतुर्दशास्य द्वाराणि कृष्णचित्रावृतानि च (८) ॥ २६० ॥
पीत पट्टावृतो ह्येष सर्व्वानिष्ट-विनाशनः।

---

(५) यद्द्यत्रैवोच्यते इति (ख) पुस्तक पाठः।
(६) रक्ततोमम् इति (ख)-रक्ततोदम् इति (ग) पुस्तक पाठः।
(७) पति इति (ख) पुस्तक पाठः।
(८) 'परिणामे तथैव च' इति (ख) पुस्तकेऽधिकः पाठः।

---

* मान-लक्षणान्यन्यानि वास्तुशास्त्रे, पुराणे, ज्योतिःशास्त्रे च सन्ति।

अत्र स्थित्वा महीपालः सर्व्वान् शत्रून् निकृन्तति ॥ २६१ ॥

दीर्घ-एकविंशतिः २१, प्रस्थ-विंशतिः २० ।

इति सर्व्वतोभद्रः ।

अष्टकोणो भवेद्भव्यः कोणे हस्तचतुष्टयम् ।
राजहस्तोन्नतः (९) कार्य्यो वुधश्चास्याधिदेवता ॥ २६२ ॥
रक्षका वसवश्चास्य पूज्यास्तत्र प्रयत्नतः ।
अष्टौ द्वाराणि चास्य स्युः पीतचित्रावृतानि च ॥ २६३ ॥
पीतपट्टावृतो ह्येष सर्व्वानिष्ट-विनाशनः ।
तत्र स्थाता क्षिति-पतिर्नरिष्टे(१०)रवमृद्यते ॥ २६४ ॥
राजदण्डो (११) भवेद्दीर्घः प्रसरे राज-हस्तकः ।
राजहस्ते राजहस्ते प्रकोष्ठान् तत्र कारयेत् (१२) ॥२६५॥
अयं नान्दीमुखो नाम चन्द्रश्चास्याधिदेवता ।
नक्षत्र-लोकः पूज्योऽत्र स यस्मादस्य रक्षकः ॥ २६६ ॥
द्वाविंशतिस्तु द्वाराणि दीर्घे दश तथान्तरे ।
अन्यत्र दीर्घ-एकं स्यात् प्रसरे एकमेव च ॥ २६७ ॥

दीर्घ-द्वितये दशद्वाराणि प्रसर-द्वितये एकं कृत्वा वा द्वितीयमेवं द्वाविंशति-(२२) द्वाराणि ।

शुक्ल-चित्रेण सहितः शुक्लपट्टेन शोभितः ।
सर्व्वार्थ-साधको राज्ञां लक्ष्मी-विजय-वर्द्धनः ॥ २६८ ॥

दैर्घ-एकादश-११, प्रस्थे-१०, इति नान्दीमुखः ।

---

(९) अत्रैतत् सन्दर्भस्थ-पारिभाषिको राजहस्तो ग्राह्यः ।

(१०) नरिष्टै रवमृद्यते इति (ग) पुस्तक पाठः ।

(११) अत्र राजदण्डपदेनैतत्सन्दर्भस्थः पारिभाषिको ग्राह्यः ।

(१२) राजहस्त...इत्यारभ्य रक्षक-इत्यन्तः सार्द्धश्लोकः (ख) पुस्तके नास्ति ।

दीर्घे त्रयो राजहस्ताः प्रसरे द्वौ प्रतिष्ठितौ ।
विनोद एष द्वाराणि त्रिंशत् कोष्ठद्वयं भवेत् ॥ २६९ ॥
रक्तचित्रेण चित्राङ्गो रक्तवस्त्रोपशोभितः (१) ।
अत्रस्थाता नरपतिर्भवेत् कीर्त्ति-प्रतापवान् ॥
सूर्य्योऽधिदेवता चास्य रक्षकाः सकल-ग्रहाः ॥ २७० ॥
दैर्घे एकत्रिंशत् ३१, प्रस्थे विंशतिः २० ।

दीर्घेन राजदण्डाङ्कं प्रसरे वाजहस्तकौ ।
विलास एष द्वाराणि चत्वारिंशद्बुधाः (२) विदुः ॥ २७१ ॥
गन्धर्व्वा राक्षसाश्चास्य प्रकोष्ठ-त्रितयं भवेत् ।
चित्र-पद्मेन शङ्खेन चित्रवस्त्रेण शोभितः ॥ २७२ ॥
दुर्भिक्ष-शमनो ह्येष (३) शस्यसम्पत्ति-कारकः ।
अत्र स्थित्वा नरपतिः प्रचुरं सुखमश्नुते ॥ २७३ ॥
दीर्घ-एकपञ्चाशत् ५१, प्रस्थे विंशतिः, २० ।

इति विलास-गृहम् ।

द्वादशहस्तप्रसरे दीर्घे द्वौ राजहस्तकौ कथितौ ।
विजये द्वादशभवन-द्वाराणि स्युर्जयप्रदान्यत्र ॥ २७४ ॥
सूर्य्योऽधिदेवता चास्य रक्षतीमं विहङ्गराट् ।
अरुणाम्भोज-चित्राङ्गो अरुणाम्बर-भूषितः ॥
अत्र स्थित्वा नरपतिः कृत्स्नां शास्ति वसुन्धराम् ॥ २७५ ॥
दीर्घे एकविंशतिः २१, प्रस्थे द्वादश, १२ ।

---

(१) उपगृहीत इति (ग) पुस्तक पाठः ।
(२) बुधोविदुः इति (ख) पुस्तक पाठः ।
(३) दमनोह्येष इति (ग) पुस्तक पाठः ।

आयामेराज-दण्डौ द्वौ प्रसरे राजदण्डकः ।
शतद्वारोपसहितः प्रकोष्ठैर्द्दशभिर्युतः ॥ २७६ ॥
दिक्पाला रक्षकाश्चास्य कुजश्चास्याधिदेवता ।
नानावर्णेन चित्रेण वसनेन विभूषितः ॥ २७७ ॥
अत्र स्थित्वा नरपतिः सुचिरं सुखमश्नुते ।
यस्मिन्राज्ये प्रतिष्ठेह विमलोग्टह-सत्तमः ॥ २७८ ॥
दुर्भिक्षं नात्रजायेत नेतयो ( ५ ) न च विप्लवः ।
नरोगोनापि शोकश्च नैवोत्पात-भयन्तथा ॥
पत्यादि-( ६ ) गुणवाहुल्य मन्यत्रकथितंबुधैः ॥ २७९ ॥
दैर्घ्यं द्विशतम्- २००, प्रस्थे-एकशतम् १०० ॥

आयाम-परिणाहाभ्यां राज्ञः षोड़शहस्तकः ।
द्वाराणि षोड़शैवास्य गुरुरस्याधिदेवता ॥ २८० ॥
रक्षिकादेवताचास्य शुक्लवस्त्रैर्विभूषितम् ( ७ ) ।
अत्रस्थित्वा नरपतिः सर्व्वार्थान् भुवि साधयेत् ॥ २८१ ॥
दैर्घ्ये १७, प्रस्थे- १६, इति वङ्गः (८) ।

आयामे राज-दण्डः स्यात्प्रसरेच तदर्द्धकम् ।
दश-प्रकोष्ठ-द्वाराणि शनिरस्याधिदेवता ॥ २८२ ॥
पिशाचा रक्षकाश्चास्य नील वस्त्रादि-भूषणम् ।
नाम्नाऽयं केलिराख्यातः भयरोग-विनाशनः ॥ २८३ ॥

---

( ५ ) अत्रेति पदेन पूर्वोक्तातिवृष्ट्यादिकं वोध्यम् ।
( ६ ) गत्यादि इति (ख)—(ग) पुस्तक पाठः ।
( ७ ) विभूषणं इति (क), विभूषिता इति (ग) पुस्तक पाठः ।
( ८ ) रङ्ग इति (ग) पुस्तक पाठः ।

अत्रस्थित्वा नर-पतिः सुखं विजयते रिपून् ॥ २८४ ॥
दैर्घ्ये एकशतम् १०० , प्रस्थे पञ्चाशत् ५० ॥

इति केलिः ।

राज-हस्तेन कोणःस्या देवं केलि-चतुर्द्दश ।
चतुर्द्दशैव द्वाराणि राहुरस्याधिदेवता ॥ २८५ ॥
नक्ताञ्चरा रत्नकाश्च नाना स्वर्णाम्बरादिकम् ।
अयं जयः प्रकटितः सर्व्वत्रैव जय-प्रदः ॥ २८६ ॥
आयामे राजहस्तःस्यात्परिणाहेऽष्टहस्तकम् ।
नानारूपं कुटोरूपः (९) वीरो नाम जयप्रदः ॥ २८७ ॥
वृहर्ष्पतिर्द्देवताऽस्य रत्नकाश्चास्य खेचराः ।
विचित्र-वसनोपेतः सर्व्वकामार्थ-दायकः ॥ २८८ ॥
दैर्घ्ये एकादश- ११ , प्रस्थे अष्टौ ८ ।

इति धीरः । ( केलि-प्रभेदोवा ) ॥

योयस्य गदितोवर्णं स्तथास्याश्चामरोऽपिच ।
राज-हस्तान्तरे पञ्च चामराःस्युर्महो-भुजाम् ॥ २८९ ॥
चन्द्रोऽपि दर्पणे हस्त ( १० ) उपरिक्रमतोन्यसेत् ।
पताका-ध्वज-युक्तश्च गृहरत्न-स रत्नसाम् ॥ २९० ॥
छत्रयुक्तं गृहं राज्ञां विजयं चक्रवर्त्तिनाम् ॥ २९१ ॥

एषां नियमः परवत् ।

इति द्वादश-चिह्नानि गृहाणां कथितानिवै ।
विमृश्यैतानि नृपति गृहारम्भं समाचरेत् ॥ २९२ ॥

---

(९) कुटीरूपम् इति (ग) पुस्तक पाठः
(१०) हस्ते इति (ख) पुस्तक पाठः ।

इति सिंहासन-स्थानमिति राष्ट्रस्य मस्तकम्।
इतोऽन्ये चित्तहर्षार्थाः प्रासादाः पृथिवीभुजः ॥ २८३ ॥
जलयन्त्रादयो * येऽन्ये तेषां नास्ति विनिश्चयः।
स्वजन्म-गेह-संस्थो यो नृपतिःशुभ-चेतनः ॥ २८४ ॥
सचिरं(११) पृथिवीं शास्ति सर्व्वार्थान् साधयत्यपि।
योवा तत्पर-गेहस्थो दुर्म्मोहाद्धरणीपतिः।
न चिरं पाति वसुधां घोरं रोगञ्चविन्दति ॥ २८५ ॥
स्वलग्न-पति-मित्रस्य गृहवारोनदुष्यति।
परञ्च,—
हीरकस्य † विशुद्धस्य ब्रह्मजातेर्म्महाद्युतेः।
सूर्य्यांशु-स्पर्शमात्रेण वमतोदीप्ति-मञ्चिशाः ॥ २८६ ॥
गृहाग्रे धारयेद्राजा तद्वज्रं वज्रधारणम् ॥ ८८७ ॥
वास्तुरस्तु,—
गृहेषु मणि-विन्यासो विधेयः सदनोपरि।
तेन सर्व्वाणि नश्यन्ति अरिष्टानि महीभुजाम् ॥ २८८ ॥

---

(११) सुचिरं इति (ग) पुस्तक पाठः।

---

* अत्र जलयन्त्रमिति यद् दृश्यते तदन्यत्राप्यस्ति। तथा च—

"भ्रमञ्चक्रं जलयन्त्रवद्घनम्" इति भास्करः।

"विलिप्तगात्रा जलयन्त्र-हस्ताः"।

"निशाः शशाङ्क-क्षत नील-राजयः
क्वचिद्विचित्रं जलयन्त्र (चन्द्र) मन्दिरम्"।

सूर्यसिद्धान्त-टीकाकृन्मते जलयन्त्रम् जलघटीयन्त्रम्। अन्ये तु सौधस्थितोत्सः, जलघटीयन्त्रमिति वा वदन्ति।

† हीरकस्य असंख्येया गुणा नामानि च वर्योदृश श्रूयन्ते। गरुड़पुराणोपपुराण-वृहत्संहिता-शुक्रनीति-प्रभृतिषु उत्पत्ति गुण-लक्षणानि तेषां सन्ति।

"अत्यन्त विशदं वज्रं तारकाभं कवेः प्रियम्।" इति शुक्रनीतिः।

भोजोऽपि,—

वास्तुखण्डाञ्ज-* रूपःस्यात् यथार्थैर्नामभिः स्वकैः।
यमद्वारात्समारभ्य यावद्द्वारमिष्यते ॥ २९९ ॥

तद्यथा,—

मृत्युर्भयंस्थिरश्चण्डो धनं विभव एव च।
वीरस्तापश्च इत्यष्टौ वास्तुभागा यथाक्रमम् ॥ ३०० ॥
यमनैऋत-तोयेश-वायु-यक्षेश-शङ्कराः।
इन्द्रोरग्निरितिप्रोक्ता विभागाणामधीश्वराः ॥ ३०१ ॥
मृत्यौ कारालयं कुर्य्यात् भय-स्थानेच पत्तयः।
स्थिरे सहचरान्नृचेत् चण्डे वाजि-गजादयः ॥ ३०२ ॥
धनेधान्यादिकं ( १ ) रचेत् विभवे कोष-रक्षणम्।
राजपट्टे ‡ भवेद्वीरः तापे कश्चि ( २ ) च्चवालयेत् ॥
प्राचीर-प्रतिभागान्ते ( ३ ) इति भोजस्य सम्मतम् ॥ ३०३ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ राजगृह-युक्तिः ॥

———*———

## तत्र वास्तुप्लव-लक्षणम्।

वास्तु-मानेन नियमो गृह-मानेन निर्णयः।
पूर्व्वप्लवो वृद्धिकरो धनदश्चोत्तर-प्लवः ॥ ३०४ ॥

---

( १ ) धनधान्यादिकं इति (क)-(ग) पुस्तक पाठः।
( २ ) कश्चित्रा(चा)लयेत् इति (ख) पुस्तक पाठः।
( ३ ) प्राचीर भाग्यन्ते इति (ख) पुस्तक पाठः।

---

* अब्जः शङ्खः, पद्ममिति वा

‡ राजपट्टश्च पञ्चरत्नान्तर्गतमेकरत्नम् इति गौड़ाः। यस्मिन्नासने पट्टाख्ये नृपमहिष्यो रभिषेको भवति तदेव राजपट्ट इति केचित्। नीलकान्तमणिरित्यन्ये देवीपुराणे : अन्यथास्ति पट्टलक्षणम्।

दक्षिणे मृत्युदो वास्तु र्धनहापश्चिम-प्लवः।
कोणे रेखाद्वयं कृत्वा मध्येरेखाद्वयन्तथा॥ ३०५॥
ऐशान-कोणतोरेखा दक्षिणाद्यै (४) र्ध्वजास्तथा।
नाचामरो नामणिश्च नापताकापि नाध्वजः॥ ३०६॥
नकुम्भादिर्नवितानो नाचित्रो नातिचित्रधृक्।
नात्युच्चो नातिनीचोवा नाप्रकीर्णः प्रकीर्णकः॥ ३०७॥
नाधातु र्नागवाक्षश्च नचैकानेक-द्वारभाग्।
नियमस्तु महीन्द्राणां सर्व्वसम्पत्ति-हेतवे॥ ३०८॥

इति राज-गृहयुक्तिः।

अन्येषान्तु यथा वास्तुमानेन नियमः।—
ध्वजोधूमस्तथा सिंहःश्वा (५) वृषोगर्द्दभो गजः।
काक इत्येष गदितो वास्तुस्थानस्य निर्णयः।
अयुग्मे सुखसम्पत्तिः युग्मञ्चविपदास्पदम्॥ ३०९॥

एव मन्यत्रापि।

ध्वजे विभूति र्विपदश्चधूमे, सिंहेविभोगः शुनि सर्व्वनाशः।
वृषे सुखं गर्द्दभतो विनाशः; गजे धनं काक-पदेच मृत्युः॥३१०॥
कोणरेखा कोणसुचिः (१) सुखसम्पत्ति-नाशिनी।
पूर्व्व-पश्चिमतोदण्ड उदयाख्यः सुखावहः॥ ३११॥
दक्षिणोत्तरतोदण्डो वंशहा यमदण्डकः।
गृहानि पातयेद्वोमान् एषांदण्ड-(२) व्यधान्तरे॥ ३१२॥

---

(४) दक्षिणाग्रैः इति (ग) पुस्तक पाठः।
(५) श्वाव्रतो इति (ख) पुस्तक पाठः।
(१) कोन सूचो (शुचि) इति (ख)-(ग) पुस्तक पाठः।
(२) दण्डः व्यधान्तरे ? इति (क) पुस्तक पाठः।

एकाचेद्दक्षिणेशानाद् द्वेच दक्षिण-पश्चिमे ।
तिस्रश्चेत् पूर्व्वतोहीना चतुःशालं ( ३ ) सुखावहम् ॥ ३१३ ॥
पश्चिमास्यं यजेत्वेश्म सिंहेतूदङ्मुखं शुभम् ।
पूर्व्वालयं वृषस्थाने दक्षिणाभिमुखंगते ॥ ३१४ ॥
पदाघातः परघातः पथाघात स्तथैवच ।
जलदोषो वृक्षदोषो दोषा इत्येवमादयः ॥ ३१५ ॥
गच्छतां पादतानलस्य श्रवणं यदिवेश्मनि ।
पदाघातो नाम-दोषः पुत्र-पौत्र-धनापहः ॥ ३१६ ॥
परिखादण्डयोर्घातौ वास्तुनोः प्रतिवेश्मिनोः ।
पर-घातो नामदोषः कुलवीर्य्य-धनापहः ॥ ३१७ ॥
पथाघातो नामदोषः ( ४ ) आघातोवास्तुनः पथः ॥
स हन्ति भोगं वंशञ्च तस्यभेदमतः शृणु ॥ ३१८ ॥
एकमाद्य ( ५ ) मुखं ( ६ ) कुर्य्यात् द्विपथं कुलवर्द्धनम् ।
त्रिपथं कुलनाशाय सर्व्वनाशश्चतुष्पथे ॥ ३१९ ॥
स्ववाप्यां परवाप्याञ्च यस्तिष्ठति जलाशयः ।
तद्दोषो जलदोषःस्यात् स हन्ति कुल-सम्पदः ॥ ३२० ॥
समृद्धिमान् (७) सुखैश्वर्य्य-(८) मृत्युक्लेश-भयामयाः (९) ।
एते जलाशये दोषा पूर्व्वादि दिक्षुच क्रमात् ॥ ३२१ ॥

---

( ३ ) शालं सुखावहःइति (क) पुस्तक पाठः ।
( ४ ) नमेदोषः इति (ख) पुस्तकः पाठः ।
( ५ ) एकमास्य(एकमर्द्द)मुख इति (ख) पुस्तक पाठः ।
( ६ ) सुखम् इति (ख)-(ग) पुस्तक पाठः ।
( ७ ) (शु)वृद्धिमान् इति (क)-(ख) पुस्तक पाठः ।
( ८ ) सुखैश्वर्य्यं इति (ख) पुस्तक पाठः ।
( ९ ) क्लेशभयावहः इति (ख) पुस्तक पाठः ।

स्ववास्तु-वृक्षतो दोषः कुल-सम्पत्ति-नाशनः ।
वर्ज्जयेत् पूर्व्वतोऽश्वत्थं प्लक्षं दक्षिणतस्तथा ॥ ३२२ ॥
ऐशान्यां रक्त-पुष्पञ्च आग्नेय्यां क्षीरिणस्तथा ।
यत्र तत्र स्थिता वृक्षा विल्व-दाड़िम-केशराः ॥ ३२३ ॥
पनसा नारिकेलाश्च (१०) शुभं कुर्व्वन्ति निश्चयम् ।
निशा नीलो पलाशश्च चिञ्चा(त्रा) श्वेतापराजिता ॥ ३२४ ॥
कोविदारश्च सर्व्वत्र सर्व्वं निघ्नन्ति मङ्गलम् ।
गृहपातन मिच्छन्ति नागस्य स्वपने * क्रमात् ॥ ३२५ ॥
पूर्व्वादिषु शिरःकृत्वा नागः शेते त्रिभिस्त्रिभिः ।
भाद्राद्यैर्व्वाम-पार्श्वेन तस्य क्रोड़े गृहं शुभम् ॥ ३२६ ॥

तत्र प्रमाणम्—

स्वामि-हस्त-प्रमाणेन ज्येष्ठपत्नी-सुतेन(वा) च ।
गृहाद्यन्तर-संस्थानं मापयेदभितो नरः ॥ ३२७ ॥

तत्र सामान्य-लक्षणम् ।

गृह भूमि-समाहृत-पिण्डपदम्,
वसु-लोचन-वाण-गजैर्गुणितम् ।
रवि-भूधर-भूधर-योग-कृतम् ;
द्रविण (द्रविण ?) (११) व्यनुसङ्कलितम् ॥ ३२८ ॥
एकाशीतिगुणे हस्ते द्विवाणैक-हृते क्षते ।
षड्वाणे न च सम्भक्ते पिण्डःस्यात सर्व्ववेश्मनः ॥ ३२९ ॥

---

(१०) नालोकेड़ (नारिकेलश्च) (ख)-(ग) पुस्तक पाठः ।
(११) प्रविण इति इति (क)-(ग) पुस्तक पाठः ।

---

* नागस्य शयने,—ज्योतिःशास्त्रे गृहारम्भे नागशुद्धिरभिहितास्ति । नागानां शिरसि गृहारम्भेऽनिष्टम् । तेषान्तु क्रोड़े शुभम् ।

तद्‌यथा,—

ध्वजादि-गेह-संस्थाने गृहमानं शुभावहम्।
दीर्घे पुत्र-(१२) फलं गेहं सिंहस्थाने प्रकीर्त्तितम् ॥ ३३० ॥
दीर्घे भानुः परिणाहे सप्तचैवाङ्गुलिद्वयम्।
इदं पुत्र-फलं गेहं वृषस्थानेऽप्युदीरितम् ॥ ३३१ ॥
दीर्घे षष्ट' (१३)···सचतुरङ्गुलम्।
इदं धनफलं गेहम् गजस्थाने ह्युदीरितम् ॥ ३३२ ॥
दीर्घे षट् प्रहरे पञ्च चतस्रोऽङ्गुलयोरपि।
इदं पुत्रफलं गेहं गजस्थाने प्रकीर्त्तितम् ॥ ३३३ ॥
दीर्घे त्रयोदशभुजाङ्गुलयश्चैक-विंशतिः।
प्रहरेऽष्टौ (१४) सुखफलं गजस्थाने गृहं विदुः ॥ ३३४ ॥
इति द्वादशकं प्रोक्तं गृहाणां सर्व्वसम्मतम्।
एवं गृहं समाचर्य्य गृहस्थः शुभ (१५) मिच्छति ॥ ३३५ ॥

भोजस्तु,—

आयाम-परिणाहाभ्यां योऽङ्ग-पिण्डो (१६) विजायते।
येन केनापि चाङ्केन शोधनीयः स इष्यते ॥ ३३६ ॥

---

(१२) पुत्रफलमिति (क) पुस्तक पाठः।

(१३) अत्रैतत् (क)-(ख)--(ग)पुस्तके नास्ति तदन्तरा त्रुटितमिवमन्ये। इति पाठम्।

(१४) प्रसरेऽष्टौ इति (क) पुस्तक पाठः।

(१५) सुखम् इति (ख) पुस्तक पाठः।

(१६) योऽङ्ग-पिण्डोविराजते इति (ख) पुस्तक पाठः।
—अत्र भ्रुवाङ्ग-पिण्डाङ्कादिकं ज्योतिःशास्त्रीय-वास्तुप्रकरणोक्तं ज्ञेयम्।

एक-द्वि-पञ्च-सप्तानि शुभान्यन्यानि चान्यथा।
आयाम-परिणाहाभ्यां सार्द्ध-द्वादश-हस्तकम् ॥ ३३७ ॥
एकन्तु मङ्गलं नाम गृहं सुख-विवर्द्धनम्।
आयाम-परिणाहाभ्यां सार्द्धहस्त-चतुर्द्दश ॥ ३३८ ॥
इदं 'कमलकं' नाम गृह-सम्पत्ति-कारकम्।
आयाम-परिणाहाभ्यां सार्द्ध हस्तस्तु षोड़श ॥ ३३९ ॥
इदं हि सर्व्वतोभद्रं स्वामिनः सुखकारकम्।
आयाम-परिणाहाभ्यां सार्द्धाष्टादश-हस्तकम् ॥ ३४० ॥
'कल्याण'न्नाम वेश्मेदं धन-धान्य-सुखप्रदम्।
आयाम-परिणाहाभ्यां सार्द्धविंशति-हस्तकम् ॥ ३४१ ॥
इदं हि सुखदं नाम भर्त्तुः सुख-विवर्द्धनम्।
मया-यदिदमुद्दिष्टं गृहपञ्चकमद्भुतम् ॥ ३४२ ॥
न तेषु स्थान-नियमः सर्व्वेष्वेतानि कारयेत्।
स्थानं मानञ्च दोषाश्च ये प्रोक्तास्तु मया क्रमात् ॥ ३४३ ॥
तद्विचार्य्य गृहं कृत्वा गृहस्थः सुखमश्नुते।
अज्ञानादथवा मोहात् योऽन्यथा गृहमाचरेत् ॥ ३४४ ॥
स विषीदति नश्येत तस्य कीर्त्ति-कुल-क्षयम् (१८)।
प्राचीराणां (१९) न नियमो गृहस्थानान्तु विद्यते ॥ ३४५ ॥
यथा वास्तु यथाशक्ति प्राचीरान्रचयेद् गृही।
गृह-वेधो (२०) यथा नस्यात्तथा प्राचीर-कल्पना ॥ ३४६ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ गृहयुक्तिः।

---

(१८) तस्य कीर्त्तिः कुलम् मूलम् इति (क) पुस्तक पाठः।
,, कीर्त्तिः कुलम्बलम् इति (ग) पुस्तक पाठः।
(१९) प्राचीनानां इति (ख) पुस्तक पाठः।
(२०) भेदो इति (ग) पुस्तक पाठः।

## अथासन-युक्तिः ।

[ अत्र सिंहासन-युक्तिरुच्यते ]

विशेषश्चाथ सामान्य-मासनं द्विविधं मतम् ।
सिंहासनं विशेषाख्यं सामान्यं खट्टजादिकम् (१) ।
राज्ञो वरतम(२)न्नाम श्रीसिंहासनमुच्यते ॥ ३४७ ॥

शुभे मूहूर्त्ते शुभ-मास-योगे,
सुवारवेला-तिथिचन्द्र-योगे ।
काले निरुत्पात-निरिति-भावे (†) ;
सिंहासनावस्थ-विधिं वदन्ति ॥ ३४८ ॥

स्थिरराशि-स्थिते भानौ चन्द्रे च स्थिर-भोदिते ।
आसनारम्भ मिच्छन्ति गृहारम्भोऽपि येषु च ॥ ३४९ ॥

एतेन गृहारम्भ-सिंहासनयोरारम्भः ।

तत्र मानः,—

वाण-वेदाग्नि-(४) पञ्चानि सोपानादि-युगैः क्रमात् ।
चत्वारिंशत्तथा त्रिंशद् विंशतिः षोड़शैव च । ३५० ॥

---

(१) सुखजादिकं इति (क)-(ग) पुस्तक पाठः ।
—अत्र खट्टा, आसन्दौ, कुर्च्चि-लघुमञ्चादिकमादिपद-ग्राह्यम् ।

(२) वरयाम्, (वर) इति (ख)-(ग) पुस्तक पाठः ।
—अत्र "वरतम" मिति विशेषणं सिंहासनस्य श्रेष्ठत्वान्मया स्वबुद्ध्याऽपूरि ।

(†) अति वृष्ट्यादीति भावः ।

(४) भेदाग्निः इति (ख)-(ग) पुस्तक पाठः ।

सिंहान्वितानि ज्ञेयानि चरणानि युगे (५) क्रमात्।
पद्मः शङ्खो गजो हंसः सिंहो भृङ्गो मृगो हयः॥ ३५१॥
अष्टौ सिंहासनानीति नीति-शास्त्र-विदो विदुः।
आदित्यादि-दशाजानां भूपतीनां यथाक्रमम्॥ ३५२॥
राज्ञः स्वहस्तैरष्टाभिरायाम-परिणाहयोः।
'राज पात्र'मिदं नाम सोपानं पुरुषोत्तमम्॥ ३५३॥
तदर्द्धमानन्तन्मध्ये राजासनमुदाहृतम्।
अर्द्धोन्नत-मिदं रम्यं प्रोक्तं कलि-महीभुजाम्॥ ३५४॥
दिगष्टर्द्धरब्धि-(६) कोणः स्याद्ब्रह्मादीनां यथाक्रमम्॥३५५॥

अथाष्टानां लक्षणानि।

गम्भारी-काष्ठ-घटितः पद्ममालोप-चित्रितः।
पद्मराग-विचित्राङ्गः शुद्ध-काञ्चन-संस्कृतः (७)॥ ३५६॥
चरणाग्रे पञ्चकोषात् पद्मराग-विचित्रिताः।
दिक्ष्वष्टौ पुत्रिका राज द्वादशाङ्गुलि-सम्मिताः॥ ३५७॥
राजासन-चतस्रस्तु एवं द्वादश-पुत्रिकाः।
रत्नैश्च नवभिः कार्य्यं निर्म्माणञ्चान्तराऽन्तरा॥ ३५८॥
रक्तवस्त्रावृतं ह्येतत् 'पद्म-सिंहासनं' मतम्।
अत्रोषित्वा नरपतिः प्रतापमति-विन्दति॥ ३५९॥
भद्रन्त्वाकाष्ठ(८)घटितः शङ्खमालोपशोभितः।
शुद्धस्फटिक-चित्राङ्गः शुद्ध-रौप्योपशोभितः॥ ३६०॥

---

(५) युगैः क्रमात् इति (ख)-(ग) पुस्तक पाठः।
(६) दिगष्टर्द्धब्धि इति (ख) दिगष्टार्द्धवि-(ग) पुस्तक पाठः।
(७) सम्भृत इति (ख)-(ग) पुस्तक पाठः।
(८) भद्रश्री इति (ख) भद्रं वा (ग) पुस्तक पाठः।

चरणाग्रे शङ्खनाभिः पुत्रिका-सप्त विंशतिः ।
स्थाने स्थाने विधातव्याः शुद्ध-स्फटिक-संस्कृताः ॥ ३६१ ॥
शुक्लपट्टावृतं ह्येतत् 'शङ्खसिंहासनं' मतम् ।
पनसे नोपघटितो गजमालोपशोभितः ॥ ३६२ ॥
विद्रुमैरपि वैदुर्य्यैः (९) काञ्चनेनापि शोभितः ।
चरणाग्रे गजशिरः पुच्छादेकैकपुत्रिका ॥ ३६३ ॥
माणिक्य रचिता रक्त-वस्त्रादिकं (१०) विभूषणम् ।
'गजसिंहासन'नाम साम्राज्य-फलदायकम् ॥ ३६४ ॥
शालकाष्ठेन घटितो हंसमालोपशोभितः ।
पुष्परागैः काञ्चनेन कुरुविन्दैश्च चित्रितः ॥ ३६५ ॥
चरणाग्रे हंसरूपं पुत्रिकास्त्वेकविंशतिः ।
गोमेदकोपघटिताः (११) पीतवस्त्र-विभूषणम् (१२) ॥३६६॥
'हंससिंहासनं' नाम सर्व्वानिष्ट-विनाशनम् (१३) ।
चन्दनेनोपघटितः सिंह मालोप-(१४)शोभितः ॥ ३६७ ॥
शुद्ध-हीरकचित्राङ्गः शुद्धकाञ्चन-निर्म्मितः ।
चरणानां सिंह-लेखः पुत्रिकाश्चैकविंशतिः ॥ ३६८ ॥
मुक्ताशुक्तिभिरन्यैश्च निर्म्मलैरेव भूषणम् ।
शुद्धशुण्डावृतं ह्येतत् 'सिंह-सिंहासनं' मतम् ॥ ३६९ ॥

---

(९) वैदुर्य्यः इति (ग) पुस्तक पाठः ।

(१०)—कं विभूषितम् इति (ख)-(ग) पुस्तक पाठः ।

(११) घटिता, घटितो इति (ख)-(ग) पुस्तक पाठः ।

(१२) विभूषितम् इति (ख) विभूषणः (ग) पुस्तक पाठः ।

(१३) प्रणाशनम् इति (ख) पुस्तक पाठः ।

(१४) मानोपशोभितम् इति (ग) पुस्तक पाठः ।

सर्वोषित्वा नरपतिः कृत्स्नां साधयति क्षितिम्।
भृङ्ग-मालोपसहितं शुद्धचम्पक-कल्पितम् ॥ ३७० ॥
शुद्धैर्मरकतैर्युक्तं पादाग्रे पद्मकोषिकाः।
द्वाविंशतिः पुत्रिकास्तु नील-वस्त्रादि-भूषणम् ॥ ३७१ ॥
'भृङ्ग-सिंहासनं' नाम शत्रुचय-जयप्रदम्।
निम्ब-काष्ठेन घटना भृङ्गमालोपशोभितम् (१५) ॥ ३७२ ॥
इन्द्रनीलैर्महानीलैः काञ्चनेनापि चित्रितम्।
चरणाग्रे मृगशिरश्चत्वारिंशच्च पुत्रिकाः ॥ ३७३ ॥
नीलवस्त्रादि-युक्तञ्च 'मृगसिंहासनं' मतम्।
लक्ष्मी-विजय-सम्पत्ति-नैरुज्य-प्रदमुत्तमम् ॥ ३७४ ॥
केशरे(वे) णोपघटितं हयमालोपशोभितम्।
समस्तवस्त्रैर्भूषा च पुत्रिकाः पञ्चसप्ततिः ॥ ३७५ ॥
चरणाग्रे हयशिरः चित्रवस्त्रादि-भूषणम्।
'हयसिंहासनं' नाम लक्ष्मी-विजय-वर्द्धनम् ॥ ३७६ ॥
इत्येतत्कथितं सारं महासिंहासनाष्टकम्।
यथा भोजेन लिखितं यथाश्चान्यैश्चपण्डितैः ॥ ३७७ ॥
एतस्यातिक्रमं दम्भाद् यः कुर्य्यात् पृथिवी-पतिः।
अचिरादेव कुरुते तस्य मृत्यु(१६)रितिक्रमम् ॥ ३७८ ॥
परासनस्थो यो राजा यो राजा च निरासनः।
स परैर्हन्यते सिंहैरिव मत्त-गजाधिपः ॥ ३७९ ॥
स्वलग्न-मित्रासन-मध्य-संस्थिति-
र्नंदुष्यतीति प्रवदन्ति तज्ज्ञाः ॥ ३८० ॥

इति श्रीभोजराजीये विशेषासनोद्देशः ॥

---

(१५) मानोपशोभितम् इति (ग) पुस्तक पाठः।

(१६) तस्य मृत्युम् इति (ख) पुस्तक पाठः।

# अथ सामान्यासनोद्देशः ।

ब्रह्म-क्षत्रिय-वैश्यानां चतुःषट् स्व स्व-कोणिकाः ।
खट्टिकाः (१७) सुखसम्भूताः शुक्लरक्तासिताम्बराः ॥ ३८१ ॥

इति खट्टिकोद्देशः ।

अष्टाभिः काष्ठ-खण्डैश्च खट्टेति प्रतिचक्षते * ॥ ३८२ ॥

अथैषां लक्षणानि ।

तिष्ठेद् यदालम्ब्य खट्टा तज्ज्ञेयं चरणाह्वयम् ।
शिरस्थं व्युपधानं स्यात् (१८) अधस्थं स्यान्निरूपकम् ॥ ३८३ ॥
आलिङ्गने उभे पार्श्वे प्राह भोज-महीपतिः ।
आलिङ्गने चतुर्हस्तौ व्युपधानं निरूपके ।
तदर्द्धेन तदर्द्धेन चत्वारश्चरणा इति ॥ ३८४ ॥
सर्व्वं षोड़शिका (खट्टा) यथा,—
आलिङ्गने सार्द्धवेदे व्युपधाने निरूपके ।
सार्द्धद्वये च चरणा हस्तैक-परिसम्मिताः ॥ ३८५ ॥
सर्व्वाष्टादशधा खट्टाः (१९) सर्व्व-कामफलप्रदाः ॥ ३८६ ॥
आलिङ्गने पञ्चहस्ते व्युपधाने निरूपके ।
तदर्द्धेन तदर्द्धेन चत्वारश्चरणा इति ॥ ३८७ ॥

---

(१७) ताः खट्टा इति (ग) पुस्तक पाठः ।
—अत्र क्षुद्रा इयं खट्टा इति खट्टिका ।
(१८) व्युपधेयं स्यात् इति (ख) पुस्तक पाठः ।
(१९) दशधा खट्टा इति (ग) पुस्तक पाठः ।

---

* "सर्व्वविंशतिका"—इत्यारभ्य "श्चरणाश्चरणा" इत्यन्तः सार्द्धश्लोकः (ख) पुस्तके नास्ति ।

सर्व्व-विंशतिका: (२०) खट्टा धनधान्य-जयप्रदा: ।
आलिङ्गने पञ्चहस्ते व्युपधाने निरूपके ।
त्रिहस्तसम्मिते पादा (१) हस्तैक-परिसम्मिता: ॥ ३८८ ॥
सर्व्वत्रिंशतिका: खट्टा एवमप्युपजायते ।
आलिङ्गने षड् हस्ते च व्युपधाने निरूपके ॥ ३८९ ॥
त्रिहस्त-सम्मिते पादाश्चत्वारश्चरणा इति ।
चतुर्विंशतिका खट्टा सर्व्व-रोग क्षयङ्करी ॥ ३९० ॥
आलिङ्गने चाष्ट हस्ते व्युपधाने निरूपके ।
चतुर्हस्ते सार्द्धहस्ताश्चत्वारश्चरणा इति ॥ ३९१ ॥
सर्व्वत्रिंशतिका खट्टा सर्व्वकामार्थ-दायिनी ।
एवमष्टविधा: खट्टा: समानेनोपदर्शिता: ॥ ३९२ ॥
आदित्यादि-दशाजानां नृणां सम्पत्ति-दायका: ।
कार्य्या: शिल्पिभिरेतासु विविधाकृति-कल्पना: ।
सर्व्व-षोड़शिका खट्टा सर्वेषामेव मुच्यते (२) ॥ ३९३ ॥
अष्टौ खण्डानि यस्या: स्युश्चतुर्हस्त-युतानि च (३)
'श्रीसर्व्वमङ्गला' नाम खट्टैषा पृथिवी-पते: ॥ ३९४ ॥
इयं यदा सच्छदना तदा सर्व्वजयाऽभिधा ।
यात्रासिद्धि: सर्व्व-सिद्धिर्विजया चाष्टमङ्गला ॥ ३९५ ॥
एकैकहस्त-वृद्ध्या तु (४) भवेन्मञ्च मत:परम् ।
जयोऽथ मङ्गल: श्रेयान् चित्रकान्त: परो महान् ॥ ३९६ ॥

---

(२०) सप्तविंशतिका इति (ख)पुस्तक पाठ: ।
(१)—श्चरणाश्चरणा इति (ख) पुस्तक पाठ: ।
(२) एवमुच्यते इति (क) पुस्तक पाठ:
(३) युतानि च (शतानि च) इति (ग) पुस्तक पाठ: ।
(४) वृद्ध्यातु इति (ख) पुस्तक पाठ: ।

एकैक हस्त वृद्धया तु मञ्चानामिति लक्षणम् ॥३९७॥
यात्रासिद्धिं समारभ्य येऽमी षोड़शकीर्त्तिताः।
आदित्यादि-दशाजानामाद्यन्तेक इयं क्रमात् ॥ ३९८ ॥
दूर-दर्शो दीर्घ-दर्शी दुर्लङ्घ्योऽथ दुरासदः।
यथोत्तरं दशगुणा पादैक (५) परिणाहिनः ॥ ३९९ ॥
प्रासादसंज्ञकाः कार्य्या राज्ञा सुखमभीप्सता।
चत्वार एते सर्व्वेषां भूपतीनां सुखावहाः ॥ ४०० ॥
श्रीभोजमते च,—
सर्व्वत्रिंशतिकां यावत् आरभ्योभय-षोड़शीम्।
खट्टाणामिति नामानि अष्टौ हस्त-(६) इयाधिकौ ॥ ४०१ ॥
तद्‌यथा,—
मङ्गला विजया पुष्टिः क्षमा तुष्टिः सुखासनम्।
प्रचण्डा सर्व्वतोभद्रा खट्टानामष्टकं विदुः ॥ ४०२ ॥

आसां पूर्व्ववद् विभागः।

पराशरसंहितायान्तु,—
अष्टाभिः काष्ठ-खण्डैस्तु योऽच्चं पिण्डो(७) विजायते।
स चेत्समो भवेत् खट्टा प्रणाश्या स्याद् यतोऽन्यथा ॥ ४०३ ॥
समे सर्वाय-सम्पत्तिर्विषमे विपदास्पदम्।
तस्मात् खट्टाङ्ग(८) पिण्डो यः समःकार्य्यः स सूरिभिः ॥ ४०४ ॥

---

(५) पदैक इति (ख) पुस्तक पाठः।
(६) हस्ता इति (ख) पुस्तक पाठः
(७) विजायते इति (ख) पुस्तक पाठः।
(८) खट्टाङ्ग इति (ग) पुस्तक पाठः।

इदन्तु सामान्यं सर्वसम्मतञ्च
काष्ठ-नियमस्तु पूर्ववदेव ॥ ४०५ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ खट्टोद्देशः ॥

—*—

## अथ पीठोद्देशः ।

धातु-पाषाण-काष्ठैश्च पीठस्त्रिविध उच्यते ।
धातवश्च शिलाश्चैव काष्ठानि विविधानि च ।
तदत्र संप्रवक्ष्यामि यथैषामुपपद्यते (९) ॥ ४०६ ॥

अथ मानम् ।

हस्तद्वयन्तु दैर्घ्येण तदर्द्धं परिणाहतः ।
तदर्द्धेनोन्नतः पीठः 'सुख' इत्यभिधीयते ॥ ४०७ ॥
हस्तद्वय-द्वयाधिक्यात् पञ्चपीठा भवन्ति हि ।
सुखो (१०) जयः शुभः सिद्धिः सम्पच्चेति यथाक्रमम् ॥४०८॥
धनभोग-सुखैश्वर्य्य-वाञ्छितार्थ-प्रदायकः ।
सम-दीर्घ-सुखावाप्तिर्विषमे विषमापदः ॥ ४०९ ॥
आयाम-परिणाहाभ्यां हस्त-द्वयमितो हि यः ।
'राजपीठ' इति ज्ञेयः सकलार्थ-प्रसाधकः ।
अत्राभिषेक-मिच्छन्ति क्षितिपस्य पुराविदः ॥ ४१० ॥
दैर्घ्योन्नति-परिणाहैः षड्हस्तमितो हि यः ।
राज्ञां चित्त-प्रसादार्थं केलि-पीठाभिधानकम् ॥ ४११ ॥

---

(९) उपयुज्यते (उपगद्यते) इति (ख)-(ग) पुस्तक पाठः ।
(१०) सुखा इति (ख)-(ग) पुस्तक पाठः ।

दैर्घ्योन्नति-परिणाहैरष्टहस्तमितो हि यः ।
अङ्ग पीठोह्ययं नाम्ना जनानाञ्च (११) सुखप्रदः ॥ ४१२ ॥
कानकोराज पीठः स्याज्जयो वा राजतः सुखम् ।
राज्ञामेवोपयोगाय्यो लाघवञ्चोत्तरोत्तरम् ॥ ४१३ ॥
राज-पीठेति वाग्रः स्या-(१२) जये सर्व्वां महीं जयेत् ॥४१४॥
जावको जावयेच्छत्रून् सुखे सुख-मवाप्नुयात् ।
राजतः कीर्त्ति-जननो धन-वृद्धि-करः परः ॥ ४१५ ॥
ताम्रः प्रताप-जननो विपक्षः क्षय-कारकः ।
लौहस्तूच्चाटने सर्व्वः सर्व्वकर्म्मसु युज्यते ॥
त्रपु सीसक-रङ्गाद्याः शत्रु-क्षय-फलप्रदाः ॥ ४१६ ॥

इति धातु-पीठाः ॥

---

## अथ शिलापीठाः ।

राज-पीठो वज्रपाणेरेव नान्यस्य दृश्यते ।
पद्मरागोदिनेशस्य चन्द्रकान्तो विधोरपि ॥ ४१७ ॥
राहोर्म्मारकतःपीठः शनेर्नील-समुद्भवः ।
गोमेदकस्तु सोमस्य स्फाटिकस्तु बृहस्पतेः ॥ ४१८ ॥
शुक्रस्य वैदूर्य-भवः प्रावालो मङ्गलस्य हि ॥ ४१९ ॥

इत्थं पुराणवार्त्ता ।

यो यस्य हि दशाजातः पीठस्तस्य हि तन्मयः ।
स्फाटिकन्तु महीन्द्राणां सर्वेषामेव युज्यते (१३) ॥ ४२० ॥

---

(११) भवेन्यङ्ग इति (क)-(ग) पुस्तक पाठः ।
(१२) वाद्रः स्यात् इति (क) पुस्तक पाठः ।
(१३) -मेवसुयते इति (क) पुस्तक पाठः ।

अभिषेके च यात्रायां उत्सवे जय-कर्म्मणि।
अयस्कान्तोपघटितः * संग्रामे पीठ इष्यते॥ ४२१॥
गरुड़ोद्गार-(१४) रचिते वर्षासु नृपतिर्वसेत्।
शुद्धरत्न-मयं पीठं भजते घन-गर्ज्जिते॥ ४२२॥
सामान्य-प्रास्तरः पीठो विलासाय (१५) महीभुजाम्।
एषां मानं गुणाश्चापि विज्ञेया धातुपीठवत्॥ ४२३॥

—·—*—

## अथ काष्ठपीठाः।

तद्यथा, मानन्तु पूर्व्ववदेव।
सम्पत्ति-सुखवृद्ध्यर्थं गाम्भारि-जनितो जयः।
जारको रोगनाशाय सुख-शत्रु-विनाशनः॥ ४२४॥
'सिद्धिः' सर्व्वार्थ-संसिद्ध्यै विजयाय च वैरिणाम्।
'शुभः' स्यादभिषेके च सम्पद्वैरि-निवारणः॥ ४२५॥
पालाशो राजकः पीठः सुख-सम्पत्ति-कारकः।
'जयः' स्यादभिषेके च शुभः शत्रु-विनाशनः॥ ४२६॥
सुखो रोग-विनाशाय सिद्धिः सर्वार्थदायिका।
सम्पदुच्चाटन-विधौ विज्ञेयः पीठ-लक्षणम्॥ ४२७॥
चान्दनस्तु सुखः पीठोऽभिषेके महीभुजाम्।
जयः स्याद्रोग-नाशाय शुभः सौख्यं प्रयच्छति॥ ४२८॥

---

(१४) गरुड़ोद्गार इति (ख) पुस्तकपाठः।
(१५) विशालाय इति (ख) पुस्तक पाठः।

---

* अयस्कान्तमुम्बकः, कान्तलौह इति केचित्।

तारको ग्रहतुष्ट्यर्थं अन्ये तु (१६) रति-दुस्करा ?।
यत्नतो निर्म्मितास्ते तु साम्राज्य-फलदायका: ॥ ४२९ ॥
कालेयको जारकोऽपि भूभुजामभिषेचने।
पीठा नगरका- १७) दीना मन्ये चन्दन-वद्विदु: ॥ ४३० ॥
वाकुलस्तु शुभ: पीठो भूभुजामभिषेचने।
जयो रोग-विनाशाय सुख-सम्पत्ति-कारक: ॥ ४३१ ॥
सिद्धि: सिद्धि-प्रदा सम्पत् संग्रामे विजय-प्रद:।
जावको (१८) जरणायस्यादिति भोजस्य सम्मतम् ॥ ४३२ ॥
एवं सुगन्धि-कुसुमा: ससारा ये च पादपा:।
वाकुलेन समः कार्य्य: एवं पीठस्य निर्णय: ॥ ४३३ ॥
ये शुष्ककाष्ठा वृक्षास्तु मृदवो लघवोऽथवा।
गाम्भारो * सदृश: पीठस्तेषां कार्य्यस्तथा गुण: ॥ ४३४ ॥
फलिनश्च ससाराश्च रक्तसाराश्च ये नगा:।
तेषां पानसवत् पीठस्तथैव गुणमावहेत् ॥ ४३५ ॥

---*---

## अथनिषेध:।

विज्ञेयो निन्दित: पीठ: लोहोत्थ: सर्वधातुजे।
शिलोत्थ: शार्करो वर्ज्जय: कर्करश्च विशेषत: ॥
काष्ठजेषु च पीठेषु नासारा नातिसारिण: ॥ ४३६ ॥

---

(१६) आन्यत्तरति (अन्ये तु) ) (क)—(ग) पुस्तक पाठ:।
(१७) नागरका इति (ख) पुस्तक पाठ:।
(१८) जारक (जीवक) इति (क)-(ग) पुस्तक पाठ:।

---

* "गाम्भारी निर्म्मितं शस्तं नान्यदारुमयं शुभम्" इति तन्त्रशास्त्रे।

तथाहि,—

आम्र-जम्बु-कदम्बानां आसनं वंशनाशनम् ॥ ४३७ ॥

भोजस्त्वाह—

गुरुः पीठो गौरवाय लघुर्लाघव-कारकः ॥ ४३८ ॥

पराशरस्तु,—

नाग्रन्थिर्नातिग्रन्थिश्च नागुरु र्ना समाकृतिः ।
पीठः स्यात् सुखसम्पत्त्यै नातिदीर्घो नवासनः (१९) ॥४३९॥
ये चान्ये पीठ-सदृशा दृश्याः शिल्पिविनिर्म्मिताः ।
गुणान् दोषांश्च मानञ्च तेषां पीठवदादिशेत् ॥ ४४० ॥
विचार्य्य तेन विधिना यः शुद्धं पीठमाचरेत् ।
तस्य लक्ष्मीरिदं (२०) वेश्म कदाचिन्न विमुञ्चति ॥ ४४१ ॥
अज्ञानादथवा मोहाद्योऽन्यथा पीठमाचरेत् ।
एतानि तस्य नश्यन्ति लक्ष्मीरायुः कुलं वलम् ॥ ४४२ ॥

इति पीठोद्देशः ॥

खट्टायां यो गुणो दोषो मानञ्च परिकीर्त्तितम् ।
तेनैव खट्टा-काष्ठोत्थं तथैवगुणमावहेत् ॥ ४४३ ॥
अनेनैव विधानेन कार्य्यं वहुविधासनम् ।
विना नौकासमं कार्य्यं सर्वत्रैवासनं गुरु ॥ ४४४ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ आसनयुक्तिः ॥

---

(१९) न कृशक इति (ग) पुस्तक पाठः ।

(२०) -रियम् इति (ख) पुस्तक पाठः ।

## अथ छत्र-युक्तिः * ।

विशेषश्चाथ सामान्यं छत्रस्य द्विविधा भिदा ।
राज्ञश्छ(सू)त्रं विशेषाख्यं सामान्यं चान्यदुच्यते ॥ ४४५ ॥

### तत्र विशेष छत्रोद्देशः ।

सदण्डं चाथनिर्द्दण्डं तज्ज्ञेयं द्विविधं पुनः ।
सदण्डं तत्र विज्ञेयं सारणाऽऽकुञ्चनात्मकम् ॥ ४४६ ॥
दण्डः (१) कन्दं शलाकाश्च रज्जवस्त्रञ्च कीलकम् ।
षड्भिरेतैः सुसन्दिष्टैः(२)श्छत्र * मित्यभिधीयते ॥ ४४७ ॥
दिगष्ट-षट् चतुर्हस्त-दीर्घो दण्डो युग-क्रमात् ।
षड् वाण-वेद-नयन-वितस्त्या कन्द उच्यते ॥ ४४८ ॥
शतान्यशीतिः षड्भिश्च चत्वारिंशद् युग-क्रमात् ।
शलाकाः षट्पञ्च-वेद-त्रि-हस्तैः सम्मिताः क्रमात् ॥ ४४९ ॥
नवभिस्तन्तुभि; सूत्रं सूत्रैस्तु नवभिर्गुणः ।
गुणैस्तु नवभिः पाशो रश्मिस्तैर्नवभिर्भवेत् ॥ ४५० ॥

---

(१) कुण्ड इति (क) पुस्तक पाठः ।
(२) सन्दिष्टै इति (क) पुस्तक पाठः ।

---

* राज्ञोऽदेयमेतत् त्रयं छत्रमुभेचामरे च ।
"अदेयमेतत् त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ।"
"छत्रन्ते वारणं गेहं" इति मार्कण्डेयपुराणे ।
केचन सूरयः, छत्रदण्डचामराणामेतत्त्रयं अदेयमिति भूभुजो मन्यन्ते ।
"छत्रीवर्षातपे नित्यम्" इति स्मृतिः ।

* अत्र दण्डकन्द-शलाका-रज्जु-वस्त्र-कीलकानां छत्रनिर्म्माणे सम्भूय कारित्वं ज्ञेयम् । तथा च प्राञ्चः प्रोचुस्त्रैविध्यमस्य—
"देवछत्रं राजछत्रं नर-छत्रन्तु भूसुराः ।
छादनाच्छत्रमित्येतत् त्रिविधं संप्रकीर्त्तितम् ॥"

नवाष्ट-सप्त-षट्-संख्यै रश्मिभीरज्जवः क्रमात् ।
वस्त्रं शलाका-द्विगुणमायामेन प्रतिष्ठितम् ॥ ४५१ ॥
भानु-दिग्ग्रह-वसुभिरङ्गुलीभिस्तु कीलकः ।
षण्णां यन्मानमुदिततद्राज्ञा(३)मेव भूतये ॥ ४५२ ॥
पादोनं युवराजस्य अन्येषान्तु तदर्द्धतः ।
एतेन राज्ञो दण्डोऽभूद् युवराजस्य तत्पुनः ॥ ४५३ ॥

अन्येषां तदेव ।

विशुद्ध-काष्ठस्य तु दण्ड-कन्दौ,
तथा शलाका अपि शुद्धवंशजाः ॥
रज्जुश्च रक्ता वसनञ्च रक्तम् ;
छत्रं प्रसादं नृपतेर्वदन्ति ॥ ४५४ ॥
प्रसादं इति प्रसादार्हम् ।

नीलीदण्डस्य वस्त्रञ्च शिरः कुम्भस्तु (४) कानकः ।
सौवर्णं युवराजस्य प्रतापं नामविश्रुतम् ॥ ४५५ ॥
चान्दनौ दण्डकन्दौ चेत् सुशुक्ले रज्जुवाससी ।
छत्रं मनोहरं राज्ञां स्वर्ण-कुम्भोपशोभितम् ॥ ४५६ ॥
कानकौ दण्डकन्दौ तु शलाकाऽपि कानका ।
शुक्लानि रज्जु-वासांसि स्वर्णकुम्भस्तथोपरि ।
इदं कनकदण्डाख्यं छत्रं सर्व्वार्थ-साधकम् ॥ ४५७ ॥
दण्ड-कन्द-शलाकाश्च शुद्ध-स्वर्णेन निर्म्मिताः ।
कीलकं स्वर्ण-घटितं अशुक्ले रज्जु-वाससी ।
कुम्भादि रथ हंसादिश्चामरादिर्यथाक्रमम् ॥ ४५८ ॥

(३) तद्दण्डानेव इति (ग) पुस्तक पाठः ।
(४) कीलक ति (ख) पुस्तक पाठः ।

कुम्भादावथ हंसादौ नवरत्नानि रचयेत् ।
द्वात्रिंशन्मौक्तिकी माला द्वात्रिंश(५)त्तत्र दापयेत् ॥ ४५८ ॥
सर्व्वोपरि ब्रह्म-जातिं विशुद्धं हीरकं न्यसेत् ।
दण्डान्ते कुरुविन्दांश्च पद्मरागांश्च विन्यसेत् ॥ ४६० ॥
स्वामिहस्तैक-मानेन चामरः सित इष्यते ।
इत्ययं नवदण्डाख्यः छत्रराजो महीभुजाम् ॥ ४६१ ॥
अभिषेके (६) विवाहे च ग्रहाणां प्रीति-वर्द्धनः ।
पताका नवदण्डाग्रे राज्ञोऽष्टाङ्गुली-सम्मिता: ॥ ४६२ ॥

अथ कुम्भादिः ।

कलशो दर्पणश्चन्द्रः पद्मकोषो यथाक्रमम् ।
ब्रह्म-चत्रिय-विट्-शूद्र-जातीनां नवदण्डके ॥ ४६३ ॥
हंसश्चासः शुकः केकी व्याघ्रः सिंहो गजोहयः ।
आदित्यादि-दशाजानां एतैस्युर्नवदण्डगाः ॥ ४६४ ॥
चामरश्चासपत्राणि चित्रवस्त्राणि च क्रमात् ।
जाङ्गलादि-महीन्द्राणां भवन्ति नवदण्डके (७) ॥ ४६५ ॥
शुक्ल-रक्त-पीत नीलं वस्त्रमण्डप-संस्थितम् (८) ।
शुक्लवर्ण-वस्त्रं सर्व्वेषामुपरि प्रणिधीयते ॥ ४६६ ॥
शुक्ला रक्ताः पीत-नीलाः पताकाश्चापि रज्जवः ।
चामराणां वर्णभेद एवमेव प्रकाशितः ॥ ४६७ ॥
नानावर्णास्तु (९) सर्व्वेषां सर्व्वत्रैवोपयुज्यते ॥ ४६८ ॥

---

(५) तत्प्रदापयेत् इति (ख) पुस्तक पाठः ।
(६) अभिषेके इति (ख) पुस्तक पाठः ।
(७) नवदण्डकाः इति (ख) पुस्तक पाठः ।
(८) संशुभम् इति (ग) पुस्तक पाठः ।
(९) वर्णान्तु इति (ख) पुस्तक पाठः ।

अर्कवक्ता(क्त्रा)भिधो विप्रस्तटवक्त्र(क्त्र)स्तु क्षत्रियः ।
तपवक्त्रस्तु वैश्यः स्याद् यशोवक्त्रस्तु शूद्रकः ॥ ४६८ ॥
अन्यानि यानि छत्राणि विविधाकृति-मन्ति च ।
तानि चित्त-प्रमोदार्थं कार्य्याणि त्रितयन्त्विदम् ॥ ४७० ॥
नवदण्डोऽभिषेके च वारे कनक-दण्डयोः ।
मनोहरं प्रयाणेषु छत्रौ (१०) भोजस्य सम्मतम् ॥ ४७१ ॥
मनोहरं श्री(११)कनक-दण्डश्च नवदण्डकम् ।
छत्रञ्च त्रिविधं ज्ञेयं त्रिविधानां मही-भुजाम् ॥ ४७२ ॥
मण्डलेशश्च राजा च चक्रवर्त्ती च यो नृपः ।
आनूपो जाङ्गलो देशः साधारण-गतिस्त्रिधा ॥
देशत्रयाधीश्वराणां छत्र-त्रयमिदं क्रमात् ॥ ४७३ ॥

दण्डनियमस्तु अन्यत्र ।

चम्पकः पनसः शालः श्रीफलश्चन्दनस्तथा ।
वकुलश्चाथ निम्बश्च वज्रवारण (१२) मित्यपि * ॥ ४७४ ॥

---

(१०) छत्रं इति (ख) पुस्तक पाठः ।
(११) स्वो (न्तु) कनक इति (ख) पुस्तक पाठः ।
(१२) वज्रधारणम् इति (ख) पुस्तकः पाठः ।

---

* अत्र वज्र वारका बहवः सन्ति—यथा,—वृक्षेषु सुण्डी, नारीकेलः, तुलसी च एतान् गृहोपरि कार्य्याः प्राचीरचितवन्तः । लौहे—अयस्कान्त-चुम्बको विशल्याकारी । एवं मन्त्रेषु—

"मुनेः कल्याण-मित्रस्य जैमिनेश्चापि कीर्त्तनात् ।
विद्युदग्नि-भयं नास्ति स्थापिते च गृहोदरे ॥"
"प्रचण्ड पवनाघाते निर्घोषस्तनितेऽपि च ।
त्रि-पठेत् जैमिनिन्तत्र प्राङ्मुखो वा ह्युदङ्मुखः ॥"
"जैमिनिश्च सुमन्तुश्च वैसम्पायन एव च ।
पुलहः क्रतु पुलस्त्यौ षडेते वज्रवारकाः ॥"
"रामं स्कन्दं हनुमन्तं वैनतेयं वृकोदरम् ।
ये स्मरन्ति विरूपाक्षं न तेषां विद्युतो भयम् ॥"
इति योगविज्ञानशास्त्रे ।

आदित्यादि-दशाजानां दण्डकाष्ठाष्टकं विदुः।
चान्दनः छत्र-दण्डस्तु सर्व्वेषामेव युज्यते॥
विशुद्ध-कोण-धारं हि तद्वज्रं वज्रधारणम्॥ ४७५॥

इति सदण्ड-लक्षणम्॥

अथ निर्द्दण्ड-लक्षणम्।

निर्द्दण्डं दण्ड-रहितं समाकुञ्चन-वर्ज्जितम्।
मणीनामथ वस्त्राणां निर्णयस्तु सदण्डवत्॥ ४७६॥
मुख्यं जघन्यं द्विविधं तत्र मुख्यमिहायतम्।
जघन्यं वलयाकारं तयोर्म्मानं यथा लघु॥ ४७७॥
दीर्घस्य मानं निर्दिष्टं भानु-दिग् नव(सु) मुष्टिभिः।
वलयस्य हि निर्दिष्टं तावतोभि वितस्तिभिः॥ ४७८॥
इति प्रोक्तो विशेषस्य विशेषो भोज-भूभुजाम्।
इत्थं विचार्य्य यो राजा राजच्छत्रं समाचरेत्।
सचिरं पाति वसुधां धन-सम्पत्ति-ऋद्धिमात् (१३)॥ ४७९॥
अज्ञानादथवा मोहाद् योऽन्यथा छत्रमाचरेत्।
सोऽचिरान्मृत्युमाप्नोति भयं रोगं कुल-क्षयम्॥ ४८०॥
विधान-शून्यं छत्रन्तु मस्तकोपरि भूपतिः।
यो धत्ते तस्य दुर्व्वुद्धेर्लक्ष्मी-कुल-वल-क्षयः॥ ४८१॥

इति विशेष छत्रोद्देशः।

कुञ्चनाद्दण्डछत्रस्य (१४) छत्रं सामान्यमुच्यते।
निर्द्दण्डस्य सदण्डस्य छत्रन्तु द्विविधं विदुः॥ ४८२॥

---

(१३) वृद्धिमान् इति (ख) पुस्तक पाठः।
(१४) दण्डछत्रन्तु इति (ग) पुस्तक पाठः।

आयाम-परिणाहाभ्यां नवमुष्टि-मितं हि तत् ।
इदं हि सर्व्वतोभद्रं सर्व्वेषामुपयुज्यते ॥ ४८३ ॥
एकैक मुष्टिवृद्धयातु यावद्विंशतिमुष्टिकम् ।
मेषादि-लग्नजातानां नृणां छत्रमिदं क्रमात् ॥ ४८४॥

अथ सदण्डम् ।

आयाम-परिणाहेन हस्तद्वयमिदं हि यत् ।
स चतुर्हस्त-दण्डाढ्यो दण्ड-छत्रोति गद्यते ॥ ४८५ ॥
सर्व्वेषां सुखसम्पत्त्यै सर्व्वत्रैवोपयुज्यते (१५) ।
एकैक वृद्धया मुष्टिस्तु छत्रे दण्डे वितस्तयः (१६) ॥ ४८६ ॥
ब्रह्म-क्षत्रिय-विट्-शूद्र जातीनां क्रमतो विदुः ॥ ४८७ ॥

क्रम नियमस्तु तथैव ।

शलाका वस्त्र-दण्डादि-वर्णः पूर्व्ववदिष्यते ॥ ४८८ ॥

भोजोऽपि—

लघुता दीर्घता चैव दण्ड-सूत्री-गुणग्रहः ।
इत्थं विचार्य्य यः कुर्य्यात् मानवश्छत्रमात्मनः ॥ ४८९ ॥
स लक्ष्मीं विजयं कीर्त्तिं प्रतापञ्चाभिविन्दति ॥ ४९० ॥
यो मोहादथवा दम्भात् कुरुते छत्रमन्यथा ।
स विषीदति भोजस्य वाक्यमेतत् असंशयम् (१७) ॥४९१॥
इति भोजराजीये युक्तिकल्पतरौ छत्रयुक्तिः ।

---

(१५) उपजायते इति (ख) पुस्तक पाठः ।
(१६) वितस्त्रयः इति (ग) पुस्तक पाठः ।
(१७) असंशयः इति (ख) पुस्तक पाठः ।

# ध्वज-युक्तिः ।

सेना-चिह्नं क्षितीशानां दण्डोध्वज इति स्मृतः ।
सपताको निष्पताकः स ज्ञेयो द्विविधो बुधैः ॥ ४९२ ॥
स पातक-ध्वस्याग्रे यथा हस्तं परिन्यसेत् ।
जय-हस्तो ध्वजो नाम नैनं सामान्यमर्हति ॥ ४९३ ॥
वंशोऽथवा कुलः शालः पालाशश्चम्पकस्तथा ।
नैपो नेषो(१)थवा दण्डस्तथा वैराज-वारणः ॥ ४९४ ॥
अश्वानादिक-(२) संज्ञानां वर्ण-रूपः प्रकाशितः ।
सर्व्वेषां चैव वंशस्तु दण्डः सम्पत्ति-कारकः ॥ ४९५ ॥

अकचटतप यशाः ।

पताका सार्द्ध-दैर्घ्येण दण्डस्तु पृथिवी-भुजाम् ।
प्रतापाय पताकास्तु अष्टावेव प्रकाशिताः ॥ ४९६ ॥
पञ्चहस्तायता(यथा) हस्त-परिणाहा जयाभिधाः ।
जया च विजया भीमा चपला वैजयन्तिका ॥ ४९७ ॥
दीर्घा विलासा लोला च ज्ञेया हस्तैक वृद्धितः ।
परिणाहे पादवृद्धि रथ वर्णस्य निर्णयः ॥ ४९८ ॥
रक्तः श्वेतोऽरुणः पीतो चित्रो नीलोऽथ कर्व्वुरः ।
कृष्णश्चेति पताकानां वर्णः रूपः प्रकाशितः ।
अवर्णा(श्वा)दिकसंज्ञानां अष्टानामष्टक-त्रयम् ॥ ४९९ ॥
कलसो दर्पणश्चन्द्रः पद्मकोषो यथाक्रमम् ।
ब्रह्म-क्षत्रिय-विट्शूद्र-जातीनां संप्रकाशितः ॥ ५०० ॥

---

(१) नैषा निम्बो इति (ख) पुस्तक पाठः ।
(२) अवर्णादिक इति (ख) पुस्तक पाठः ।

गजादि-युक्ता सा प्रोक्ता जयन्ती सर्व्वमङ्गला ।
गजः सिंहो हयो द्विपी चतुर्णां पृथिवी-भुजाम् ॥ १ ॥
हंसादि-युक्ता विज्ञेया राज्ञा सैवाष्टमङ्गला ।
हंसः केकी शुकः चासो ब्रह्मादीनां यथाक्रमम् ॥ २ ॥
चामरादि-समायुक्ता सा ज्ञेया सर्व्वबुद्धिदा ।
चामरश्चास-पद्मानि चित्रवस्त्रं तथा सितम् ॥ ३ ॥
चतुर्णां वेदनयन-पञ्चास्व (३) गणिताः क्रमात् ।
तदग्रे यदि विन्यस्तं पताका-द्वितयं भवेत् ॥ ४ ॥
इयं (४) हि सर्व्वतोभद्रा पताका चक्रवर्त्तिनः ।
तद्वर्णः पूर्व्ववज् ज्ञेयः प्रमाणं विधि-बोधितम् ॥ ५ ॥
कानकं राजतं ताम्रं नाना धातुमयं क्रमात् ।
कुम्भादिकं प्रशंसन्ति पताकाग्रे मही-भुजाम् ॥ ६ ॥
अत्रापि रत्न-विन्यासो विधेयो रजत-क्रमः ।
चतुर्भिर्म्मकराद्यैर्युक्ता चेत् सर्व्व-सिद्धिदा ॥ ७ ॥
तदाश्रेयस्करी नाम सा पताका विजायते ।
मकरोऽथ गजः सिंहः व्याघ्रो वाजी मृगः शुकः ॥ ८ ॥
शुचि (५) श्चेति समुद्दिष्टमादित्यादि-दशाभुवाम् ।
इति प्रोक्तः पताकानां निर्णयः पृथिवी-भुजाम् ॥ ९ ॥
अन्येषामतिसंक्षेपात् पताका-लक्षणं शृणु ।
गभस्तिरथहस्तश्च तथा हस्तद्वयं क्रमात् ॥ १० ॥
यथोत्तरं द्विगुणितं पत्तौ दशगुणैः क्रमात् ।
एवं सहस्राधिपतेः पताका तौर्य्यहस्तिकी ॥ ११ ॥

---

(३) पञ्चान्त्व इति (ख) पुस्तक पाठः ।
(४) इदं (इमं) इति (ख) पुस्तक पाठः ।
(५) सूची इति (ग) पुस्तक पाठः

पताका सार्द्ध-दैर्घ्येण दण्डमानं प्रकीर्त्तितम् ।
वर्णादिकन्तु यत्किञ्चित् तत् सर्व्वं पूर्व्ववन्मतम् ॥ १२ ॥
दीर्घता लघुता चेति सपताक-ध्वजे गुणाः ।
अङ्कुशादिकमन्यच्च ध्वजाग्रे युक्तितोन्यसेत् ॥ १३ ॥
संक्षेपेनेति निर्द्दिष्टं पताका-विधि-लक्षणम् ।
एवं विमृश्य(ष्य) मतिमान् यः पताकां समाचरेत् ॥ १४ ॥
स प्राप्नोति श्रियं कीर्त्तिं कुलवीर्य्य-बलोन्नतिम् ।
पताकां पृथिवी-पालो योऽज्ञानादन्यथा चरेत् ।
स विषीदति संग्रामे मन्ददन्त (१) इव द्विपाः ॥ १५ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ सपताक-ध्वजयुक्तिः ॥

—— ०० ——

## अथ निष्पताक-ध्वजः ।

पूर्व्ववद्दण्ड-नियमस्तत्र दैर्घ्ये विशेषणम् ।
दण्डपञ्चाणि पद्मञ्च कुम्भश्च विहगोर्मणिः ॥ १६ ॥
निष्पताको ध्वजो राज्ञां षड्भिरेतैः सुसज्जितैः ।
जयः कपालो विजयः चैत्रस्तत्र शिव-क्रमात् ॥ १७ ॥
राज्ञः पुरुषमानेन दण्डमानं प्रकीर्त्तितम् ।
ऊर्द्धाधः क्रमयोगेन तद्दण्डादिकमुच्यते ॥ १८ ॥
केकी चासौ मत्स्यरङ्कः(ङ्कुः) द्विविधानां महीभुजाम् ।
ध्वजाग्रेषु विधेयानि पञ्चाणि श्रियमिच्छताम् ।
पद्मं कुम्भश्च विहगो माला चैव यथाक्रमम् ॥ १९ ॥

---

(१) मन्द दण्डः इति (क)-(ग) पुस्तक पाठः

उपर्य्युपरितो देयं (७) निष्पताके महीभुजाम् ।
अष्ट-षोड़श-द्वात्रिंशच्चतुःषष्टिदलाम्बुजम् ॥ २० ॥
वृत्ताष्ट-दिग्दलेशाश्च(म्बुः) कुम्भः सम्पत्ति-कारकः ।
हंसश्चासः शुकःकेकी पक्षिणश्च यथाक्रमम् ॥ २१ ॥
वज्रञ्च पद्मरागञ्च नीलं वैदुर्य्य मेव च ।
ब्रह्म-क्षत्रिय-विट्-शूद्र जातीनां स्याद् यथाक्रमम् ॥ २२ ॥
कनकं रजतं युग्मं द्विविधानां महीभुजाम् ।
निष्पताक-ध्वजाङ्गादि निर्म्माणे योगमिष्यते ॥ २३ ॥
पताका यदि हस्तैका सर्वाग्रे योग्यवर्णिनी ।
अयं ध्वजो विशालाख्यो विज्ञेयश्चक्रवर्त्तिनः ॥ २४ ॥
तत्रैव चामरे योग्ये विज्ञेयाः सर्वसम्पदः ।
इति राज्ञां समुद्दिष्टमन्येषां ध्वज उच्यते ॥ २५ ॥
नोर्द्ध विंशति-हस्तेभ्यो नचार्व्वाग्दशहस्ततः ।
हस्त-हस्तैकसंवृद्धया ध्वजो दशविधोमतः । २६ ॥
सहस्राधिप (८) मारभ्य यावत् स्यादयुताधिपः ॥ २७ ॥
न सहस्राधिपान्यूनो ध्वज-धारण मर्हति ।
अपि कोटिपते र्ज्ञेयो ध्वजो विंशति-हस्तकः ॥ २८ ॥
अत्रापि वर्ण-वस्त्रादि-निर्णयः पूर्ववन्मतः ।
स्थिरता चित्रता चेति निष्पताक ध्वजे गुणौ ॥ २९ ॥
यदेतदुभयं चिह्नं उभयोः संप्रकाशितम् ।
तत्प्रमाण-ध्वजे ज्ञेयमप्रधानेन निर्णयः ॥ ३० ॥

---

(७) धेयम् इति (क) पुस्तक पाठः ।
(८) सहस्रादिकम् इति (ख) पुस्तक पाठः ।

निष्पताक ध्वजोद्देशः प्रोक्तोऽयं भोज-भूभुजा।
एतद्विमृश्य मतिमान् चिरं सुखमवाप्नुतात् ॥ ३१ ॥
यो दम्भादथवाज्ञानाद्विलङ्घयति मानवः।
स विसीदति नश्येत तस्य कीर्त्तिःकुलं बलम् (८) ॥ ३२ ॥

इति ध्वजयुक्तिः।



## अथोपकरण-युक्तिः।

छत्र ध्वज सिंहासन यानादिभ्यो यदन्यत्स्यात्।
राज्याङ्गं तदुपकरणं तस्माल्लोके विशेषात्तु ॥ ३३ ॥

तस्य [उपकरणस्य] गणना।

चामरश्चाथ भृङ्गारः चसकश्च प्रसाधनीम्।
वितानश्चाथ शय्या च व्यजनं दर्पणाम्बरम्।
एतन्नवकमुद्दिष्टं राजोपकरणाख्यया ॥ ३४ ॥
तत्र चामरोद्देशः।
हस्तद्वयोन्नतः शुभ्रः सुवर्णावलि-भूषितः।
हीरेणालङ्कृतो राज्ञां भव्यनामा सुखप्रदः ॥ ३५ ॥
वालश्चामर दैर्घ्याद्दा(त्वात्) आयामत्वं प्रकाशितम्।
भव्यो भद्रो जयः शीलः (१०) सुख-सिद्धिबलः स्थिरः।
वितस्त्येकैक सम्वृद्ध्या दिनेशादि-दशाभुवाम् ॥ ३६ ॥

---

(८) कुलं मूलम् इति (ग) पुस्तक पाठः।
(१०) शौलः इति (ग) पुस्तक पाठः।

सौवर्णं राजतं युग्मं त्रैदशानां महीभुजाम् ।
योजयेदिति निश्चित्य बलि-कल्पन कर्म्मणि ॥ ३७ ॥
स्थलजं जाङ्गलो राजा आनूपो जलजं वहेत् ।
हीरश्च पद्मरागश्च वैदूर्य्यं नील मेव च ॥ ३८ ॥
मणिर्वलिषु योक्तव्यो ब्रह्मादीनां यथाक्रमम् ।
शुक्लो रक्तोऽथ पीतश्च नानावर्णौ यथाक्रमम् ॥ ३९ ॥
ब्रह्म-क्षत्रिय-विट्-शूद्र-जातीनाञ्च महीभुजाम् ।
चामरं राज-केशस्य न सामान्यस्य भुपतेः ॥ ४० ॥
न भव्यमानं तो न्यूनं चामरं गुणमावहेत् ।

---

## अथ चामरपरीक्षा ।

स्थलजं जलजञ्चेति चामरं द्विविधं विदुः ॥ ४१ ॥
मेरौ हिमालये विन्ध्ये कैलासे मलये तथा ।
उदयेऽस्तगिरौ चैव गन्धमादन पर्व्वते ॥ ४२ ॥
एवमेतेषु शैलेषु याश्चमर्यो भवन्ति हि ।
तासां वालस्य जायेत चामरेत्यभिधा भुवि ॥ ४३ ॥
आपीताः कनकाद्रिजा हिमगिरेः शुभ्रायता विन्ध्यजाः,
कैलासादसिताः सिता मलयजाः शुक्लास्तथा पिङ्गलाः ।
आरक्ता उदयोद्भवा श्चमरजा आनील-शुक्लत्विषः ;
कृष्णाः केचन गन्धमादन भवाः पाण्डुत्विष-श्चामराः ॥४४॥
अन्येषु प्रायशः कृष्णा श्चामराः सम्भवन्ति हि ।
ब्रह्म-क्षत्रिय-विट्-शूद्र-जातयस्ता-श्चतुर्विधाः ॥ ४५ ॥
चमर्य्यः पर्वतोद्भूता यथापूर्वं गुणावहाः ।
दीर्घ-वालाः सुलघवः स्निग्धाङ्गाश्चापि कोमलाः ॥ ४६ ॥

विरला स्तनु-पर्वाण: चमर्य्यो ब्रह्म-जातय: ।
विना संस्कारमप्यासां चामरंविमलम्भवेत् ॥ ४७ ॥
दीर्घ-वाला: सुगुरव: कर्कशांशा भृशं घना: ।
तीक्ष्णाग्रास्तनुपर्व्वाण श्चमर्य्य: क्षेत्रजातय: ॥ ४८ ॥
विना संस्कारमप्यासां चामरं विमलं भवेत् ।
दीर्घ-वाला: सुगुरव: कर्कशांशा भृशं घना: ॥ ४९ ॥
विज्ञेया: स्थूलपर्व्वाण श्चमर्य्यो वैश्यजातय: ।
संस्कारे चाप्यसंस्कारे न स्वभावं त्यजेदिद(य)म् ॥ ५० ॥
खर्वबाला: सुलघव: कोमलाङ्गा भृशं घना: ।
'विज्ञेया: स्थूलपर्व्वाण श्चमर्य्यो वैश्यजातय: ॥ ५१ ॥
संस्कारेण भवे(परि)च्छन्नं भवेन्मलिनमन्यथा(दा) ।
खर्व-वाला: सुगुरवो विमला: कर्कशास्तथा' ॥ ५२ ॥
चमर्य्य-स्तनु-पर्वाणो विज्ञेया: शूद्र-जातय: ।
संस्कारेणापि मलिनमासां चामरमिष्यते ॥ ५३ ॥
दीर्घता लघुता चैव स्वच्छता घनता तथा ।
गुणाश्चत्वार इत्येते चामराणां प्रकीर्त्तिता: ॥ ५४ ॥
खर्व्वता गुरुता चैव वैवर्ण्यं मलिनाङ्गता ।
दोषाश्चत्वार इत्येते चामराणां प्रकीर्त्तिता: ॥ ५५ ॥
दीर्घे दीर्घायुराप्नोति लघौ भीति-विनाशनम् ।
स्वच्छ: (१) स्याद्धन-कीर्त्तिभ्यां घने स्यु: स्थिर-सम्पद: ॥५६॥
खर्व्वे खर्वायुरुद्दिष्टं गुरुर्गुरु-भयप्रद: ।
विरले रोग-शोकाभ्यां मलिनं मृत्युमादिशेत् ॥ ५७ ॥

इति स्थलजम् ( चामरम् ) ॥

---

( १ ) स्वच्छे-स्यात् इति (ख) पुस्तक पाठ: ।

## अथ जलजम् ।

लवणेक्षु सुरा सर्पिस्तोयो दधिपयोब्धिषु ।
यथोत्तरं गुणवत्तास्वमर्थ्यः सप्तसप्तसु ॥ ५८ ॥
पुच्छानि तासां क्षत्तानि (२) जन्तुभिर्मकरादिभिः ।
कदाचिदुपलभ्येत तत्तीरे पुण्य-शालिभिः ॥ ५९ ॥
लवणाब्धि-समुद्भूतं पीतं गुरु-घनस्तथा ।
वह्नौक्षिप्तस्य(स्व) वालस्वेत् किञ्चिच्चट-चटायते ॥ ६० ॥
इक्षु-सिन्धूद्भवं ताम्रं चामरं विमलं लघु ।
मक्षिका मशकाश्चैव तस्मिन् व्यजति चामरे ॥ ६१ ॥
सुराब्धि-जातं कलुषं कर्व्वुरं गुरु-कर्कशम् ।
तद्गन्धेनैव माद्यन्ति (३) अपि वृद्धा मतङ्गजाः ॥ ६२ ॥
सर्पिःसिन्धूद्भवं स्निग्धं श्वेता-पीतं घनं लघु ।
वायुरोगाः प्रशाम्यन्ति तस्य वीजन-वायुना ॥ ६३ ॥
जल-सिन्धूद्भवं पाण्डु दीर्घं लघु घनं महत् ।
त्रिदशस्यैव तल्लक्ष्मीस्तस्य वीजन-वायुना ॥ ६४ ॥
दधि-सिन्धू-भवं श्वेतं वामनं लघुसंहतम् ।
अस्य वातेन नश्येत्तु तृष्णा मूर्च्छा-मदो भ्रमः ॥ ६५ ॥
नारिष्टं नेतयस्तस्य यस्येदं चामरं गृहे ।
क्षीराब्धि-सम्भवं श्वेतं दीर्घं लघु घनं महत् ॥ ६६ ॥
अस्य चामर-राजस्य विज्ञेयो गुणविस्तरः ।
नाल्पेन तपसा लभ्यो देवानामपि जायते ॥ ६७ ॥
क्षियतेऽभ्यन्तरे सिन्धोर्नागैः सम्पत्ति-लोलुपैः ।

---

(२) समर्थैः इति (ख) पुस्तक पाठः ।
(३) मात्यन्ति इति (ग) पुस्तक पाठः ।

एषां पूर्ववदुन्नेयं जाति-दोष-गुणादिकम् ॥ ६८ ॥
स्थलजे जलजे चैव भाव्यमेत द्विशेषणम् ।
स्थलजं सुखदह्यं हि दाहे मिषमिषायते ॥ ६९ ॥
जलजं वह्निदुर्दह्यं महान्तं धूममुद्गीरेत् (४) ।
चामराणां समुद्दिष्टं इत्येवं लक्षणद्वयम् ।
एवं विमृष्य यो धत्ते स राजा सुखमश्नुते ॥ ७० ॥
जलजं चामरं राजा यो धत्ते जाङ्गलेश्वरः ।
तस्याचिरात् कुलं वीर्य्यं लक्ष्मीरायुश्च नश्यति ॥ ७१ ॥
अनूपाधीश्वरो राजा यो वहेत् स्थलजं तथा ।
तस्यैतानि विनश्यन्ति लक्ष्मीरायुर्यशोवलम् ॥ ७२ ॥
नालं वर्णद्वये तेषां विधेयं शिल्पिनां क्रमात् ।
संस्कारो वालुकायन्त्रे(यान्तु) मसूर-सलिलादिभिः (५) ॥७३॥
एषां कृत्रिमदण्डत्वं प्रतिभाति यदा क्वचित् ।
तद्दोषण-सलिल-क्वाथात् कृत्रिमत्वं विपद्यते ॥ ७४ ॥

इति श्रीभोजराजीय युक्तिकल्पतरौ उपकरणयुक्तौ चामरोद्देशः ॥

---

## अथ भृङ्गारोद्देशः ।

राज्ञोऽभिषेक-पात्रं यद् 'भृङ्गार' इति तन्मतम् ।
तदष्टधा तस्य मानमाकृतिश्चापि चाष्टधा ॥ ७५ ॥
सौवर्णं राजतं भौमं ताम्रं स्फाटिकमेव च * ।
चान्दनं लौहजं शार्ङ्गमेतदष्टविधं मतम् ॥ ७६ ॥

---

(४) मुद्दिशेत् इति (२) पुस्तक पाठः ।
(५) मसृमसलिलादिभिः इति (२) पुस्तक पाठः ।

---

* 'सौवर्णमित्यारभ्य-उन्मिता' इत्यन्तं सार्द्धश्लोको (ख) पुस्तके नास्ति ।

भानुदिक् नव सप्ताष्ट-रुद्रलोक-सुरोन्मिताः।
अष्टावष्टौ समाख्याता आयाम-परिणाहयोः ॥ ७७ ॥
द्वि-चतुर्वाण-वेदाब्धि(६) वाणसप्ताष्ट(त्म) वृत्तिता (७)।
यथाक्रमं समुद्दिष्टं आदित्यादि-दशाभुवाम् ॥ ७८ ॥
पद्मरागस्तथा वज्रं वैदुर्य्यं मौक्तिकन्तथा।
नीलं मरकतश्चैव मुक्ताच सप्त कीर्त्तिताः ॥ ७९ ॥
भृङ्गारसप्तके न्यास्या(८)नभौमो मणिमर्हति।
कानकं मृन्मयं वापि सर्व्वेषामुपयुज्यते ॥ ८० ॥
कानकन्तु क्षितीशानां मृन्मयं सार्व्वयोगिकम्।
शङ्ख पद्मेन्दुकह्लारं प्रत्यस्तं विन्यसेत् क्रमात् ॥८१॥
चतुर्विधानां भूपानां चान्द्रः सर्व्वत्र शस्यते।
श्वेतं रक्तं तथा पीतं कृष्णं चन्दनमुच्यते ॥ ८२ ॥
एतेषां सलिलैः सेकः चतुर्णां स्यान्महीभुजाम्।
मल्ली पद्मञ्च नीलञ्च तथा कृष्णापराजिता।
एषां पुष्पानि केशेषु चतुर्जाति-महीभुजाम् ॥ ८३ ॥
हीरकं पद्मरागश्च वैदुर्य्यं नीलमेव च।
चत्वारो मणयो धेयाः चतुर्णां सेचनाम्भसि ॥ ८४ ॥
इत्थं निश्चित्य यः कुर्य्यात् नृपतिः सेकमात्मनः।
स चिरायुर्भवेद्भोगी इतोऽन्यस्त्वन्यथाचरन् ॥ ८५ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ
भृङ्गारोद्देशः ॥

---

(६) वालसप्ताष्ट इति (ग) पुस्तक पाठः।
(७) सप्ताङ्गवृत्तिता इति (ख) पुस्तक पाठः।
(८) -नृ भौमो इति (ख) पुस्तक पाठः।

## अथ चषकोद्देशः ।

यत्पानपात्रं भूपानां तज्ज्ञेयं चषकं बुधैः ।
कानकं राजतं चैव स्फाटिकं काचमेव च * ॥ ८६ ॥
वृत्तं स्व(सु)राष्ट्र-दिक्कोणं चतुर्णां पृथिवीभुजाम् ।
इत्यन्यत् सम्मतं तेषां निर्णयः पाठ-सम्मतः ॥
स्व-मुष्टि-सम्मितं रत्नैः चतुर्व्वर्णैः समन्वितम् ॥ ८७ ॥
मौक्तिकं (६) वाथ फालम्बा सर्व्वेषामेव युज्यते ।
काष्ठजं धातुजं शैलं जाङ्गलादि-महीभुजाम् ॥ ८८ ॥
'न (†) त्वन्यत्सम्मतं तेषां निर्णयः पाठ-सम्मतः ।
स्व मुष्टिसम्मितं रत्नं चतुर्वर्णैः समन्वितम्' ॥ ८९ ॥
यदन्यत्तोय-पानादि-पात्रं पृथ्वीभुजाम्भवेत् ।
एवं तत्रापि नियम इति भोजस्य निश्चयः ॥ ९० ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ चषकोद्देशः ।

### अथ प्रसाधनी ।

प्रसाधनी दिङ्नव-नाग-सप्त,
सङ्ख्याभिरुक्ताङ्गुलीभिः क्रमेण ।
चतुर्विधानां पृथिवी-पतीनां ;
सम्पत्ति-सौभाग्य-यशः समृद्धिदा ॥ ९१ ॥

---

(९) मार्त्तिकं इति इति (क) पुस्तक पाठः ।

---

* काचपात्रत्वन्तु भारत-रामायण-स्मृति-पुराण-कादम्बर्य्यादौ दृश्यते ।

† "न त्वन्यदित्यारभ्य-समन्वितम्" इत्यन्त एकः श्लोकः (क) (ग) पुस्तकेऽधिकः पठितः इति मन्ये ।

काष्ठजा धातुजा चैव शृङ्गजा च यथाक्रमम् ।
जाङ्गला नूप-सामान्य-देशजानां महीभुजाम् ॥ ९२ ॥
छत्रदण्ड-वदुन्नेयः काष्ठजाया विनिश्चयः ।
कनकं रजतं ताम्रं पित्तलं सीसकं तथा ॥ ९३ ॥
लोहं सर्व्वं(ा)श्च सर्व्वार्थं-(र्द्धं)मादित्यादि-दशाभुवाम् ।
राज्ञामेवोपयुज्येत कालकीर्त्ति-प्रसाधनी ॥ ९४ ॥
मृगाणां महिषाणाञ्च शृङ्गजाता प्रसाधनी ।
गज-दन्त-समुद्भूता राज्ञामेवोपयुज्यते ॥ ९५ ॥
अत्रापि रत्न-विन्यासो ज्ञेयश्चामर-दण्डवत् ॥ ९६ ॥
गुरुता लघुता चैव तथा घन-शलाकता ।
मनोहरत्व-मुदितं प्रसाधन्या गुणग्रहः ॥ ९७ ॥
... ... ... ... ... ... ... *

# अथ वितान-लक्षणम् ।

वितानोऽष्टविधः प्रोक्तस्तेषां लक्षणमुच्यते ।
आयाम-परिणाहाभ्यां अष्टहस्तमितो हि सः(यः) ॥ ९८ ॥
वितानो मङ्गलो नाम मङ्गलाय महीभुजाम् ।
आयामो दशहस्तेन परिणाहेऽष्टहस्तकः ॥ ९९ ॥
वितानो विजयो नाम भर्त्तुः सर्व्वार्थ-साधकः ।
आयामे द्वादशभुजः प्रसरे दशहस्तकः ॥
विताने अपि ... ... यथाक्रमम् ।
... ... ... ... ... (†) ॥ १०० ॥

* अत्र सन्दर्भभागं किञ्चित् त्रुटितं पश्यामि । आदर्शेषु तथास्ति ।
† अत्रापि च तथैवादर्शेषु सन्दर्भांशोऽन्तरा नावलोक्यते ।

सामान्यामात्य-भूपाल-चक्रवर्त्तिषु योजयेत् ।
शुक्लवर्णा च सर्व्वेषां सर्व्वत्रैवोपयुज्यते ॥ १ ॥
विशीर्णता कोमलता उच्चता-समता तथा ।
स्वच्छता चेति कथितं शय्यानां गुणपञ्चकम् ॥ २ ॥
इत्थं विमृश्य स्वपिति शय्यायां यो महीपतिः ।
सचिरं सुखमाप्नोति दुःखन्तु विपरीतकम् (तः) ॥ ३ ॥

वितानतुल्यो व्यजनस्य वर्णः,
प्रमाणमेवापर मत्र गद्यते ।
हीने भवेदेष(षु) वितस्ति-सम्मितो ; (१)
भवेच्चतुर्णां व्यजनं शुभाय (२) ॥ ४ ॥

पञ्चवस्त्र-शलाकोत्थं त्रिविधानां भवेदिति * ।
दर्पणः स्वर्ण-रजत-त्रपु-लौह-समुद्भवः ॥ ५ ॥
वितस्ति-सम्मितो·भव्यो रसाद्यः सुखवर्द्धनः ।
भव्यः सुखो जयः क्षेमश्चतुरङ्गुलि-वर्द्धनात् ॥ ६ ॥
चतुर्विधानां भूपानां चतुरङ्ग-प्रसाधनः ।
आयाम-परिणाहाभ्यां चतुरङ्गुलि-सम्मितः ॥ ७ ॥
सर्व्वेषामुपयुज्येत विजयो नाम-दर्पणः ।
पौरुषं पौरुषार्द्धञ्च तदर्द्धञ्च यथाक्रमम् ॥ ८ ॥
चक्रवर्त्त्यन्यभूदेव-सामान्यानां प्रदर्शिताः ।
ऊर्द्ध-विस्तृत-मानन्तु पौरुषं मानमुच्यते ॥ ९ ॥

---

(१) वितस्तिसंख्य' इति (क) पुस्तक पाठः ।
(२) भव्योवसाद्यः शुभसुखवर्द्धनः इति (ग) पुस्तक पाठः ।

---

* पञ्चवस्त्रेत्यारभ्य-सुखवर्द्धन इत्यन्तः सार्द्धश्लोकः (ग) पुस्तके नास्ति ।

अष्टलोह-समुद्भूतः सर्व्वेषामुपयुज्यते ।
य उक्तो दर्पणः सर्व्वं स्त्रैविध्यं नोपयुज्यते (†) ॥ १० ॥
दैवात्काल-विशेषाद्वा दैव-मानुष-राक्षसाः ।
दैवेसु मानोद्भवनं सुखादिकमिहेष्यते ॥ ११ ॥
मानुषे सह(साह) सम्मानं सुखादिरुपलभ्यते ।
दैवे सर्व्वार्थ-संसिद्धिर्मानुषे सुखसम्पदः ॥ १२ ॥
राक्षसे विपदः सर्व्वा स्त्रयाणां हि गुणत्रयम् ।
देवाराधनतो दैवं विलासे मानुषं मतम् ॥ १३ ॥
संग्रामे राक्षसं पश्येत् इति भोजस्य सम्मतम् ।
वस्त्रं चतुर्विधं प्रोक्तं श्वेत-रक्तास्तथैव च ॥ १४ ॥
पीतकृष्णमिति ब्रह्म-क्षत्र-विट्-शूद्र जन्मनाम् ।
श्वेतम्बाप्यथवा चित्रं सर्व्वेषान्तु प्रशस्यते ॥ १५ ॥
'भोजस्तु' जाङ्गलादीनां त्रिविधं वस्त्रमुक्तवान् ।
कौषेयमथकार्पासं वार्क्ष्वं सुख-समृद्धये ॥ १६ ॥
वेतना(ताना:) गुरुता चैव कौषेयस्य गुणग्रहः ।
लघुता गुरुता चैव वार्क्षस्य गुण-संग्रहः ॥ १७ ॥
लोमजं वसनं भव्यं सर्व्वेषामुपपद्यते ।
अशीतता चालघुता लोमजस्य गुणग्रहः ॥ १८ ॥

अथैषां निर्णयः ।

कृमिकोष-समुद्भूतं कौषेय मिति गद्यते ।
ब्रह्म-क्षत्रिय-विट्-शूद्राः कृमयस्तु चतुर्विधाः ॥
सूक्ष्मासूक्ष्मौ मृदु-स्थूलौ तन्तवस्तु यथाक्रमम् (१) ॥ १९ ॥

(१) मृद्वष्टौम (क) (मृद्वष्टम) इति (ख) पुस्तक पाठः ।

† 'य उक्त इत्यारभ्य···इहेष्यते' इत्यन्तः सार्द्धश्लोको हि (ख) पुस्तके नास्ति ।

ये जन्तवो दक्षिण-पूर्व्वसिन्धु,—
कच्छेवने वा प्रसव(र)न्ति सूक्ष्माः ।
शुक्लातिशुक्लं प्रसवन्ति तन्तुं ;
ते ब्राह्मणाः पुण्यतमाः प्रदिष्टाः ॥ २० ॥
ये जन्तवः पश्चिम-सिन्धुकच्छे,
वनेऽथवाऽनूप मही-प्रदेशे ।
आपीत-शुक्लं प्रसवन्ति तन्तुं ;
तेऽमी विशः पुण्यतमाः प्रदिष्टाः ॥ २१ ॥
ये जन्तवः सर्व्वसमुद्रकच्छे,
वनेऽथ साधारण भू-प्रदेशे ।
नानाकृतिन्ते प्रसवन्ति तन्तुं ;
गुरुं गरिष्ठाकृतयो हि शूद्राः ॥ २२ ॥

ब्रह्म-क्षत्रिय-विट्-शूद्र-संज्ञकानि यथाक्रमम् ।
वस्त्राणि तेभ्यो जायन्ते यथापूर्व्वं शिवानि च ॥ २३ ॥
एकजातिभवं वस्त्रमुत्तमं संप्रचक्षते ।
द्विजाति-सम्भवं मध्यं त्रैजातं मध्यमं विदुः ॥ २४ ॥
चतुर्जातं हि कौषेयं कदाचिदपि नाचरेत् ।
चत्वारि तेषां नश्यन्ति आयुः कीर्त्तिः कुलम्बलम् ॥ २५ ॥
नानावर्णाकृतिन्त्वेषां शिल्पिनः कथयन्ति हि ।
बहुकार्पास-सूत्रोत्थं(त्थ') कार्पासमिति गद्यते ॥ २६ ॥
रूपसौक्ष्म्यादि भेदेन तस्यानेकविधो भवेत् ।
तच्चैवं सर्वयोग्यं हि सर्वेषामिति सम्मतम् ॥ २७ ॥
वृक्षत्वक्-सम्भवं वार्क्षं तज्ज्ञेयं द्विविधं पुनः ।
जाङ्गलानूपसामान्यो-देशो यो हि त्रिधोदितः ॥ २८ ॥
तत्र पुण्यप्र-देशे तु ये पुण्या अपि पादपाः ।

तस्य त्वक् सम्भवं वस्त्रं त्रिविधानां महीभुजाम् ॥ २९ ॥
ते वृक्ष-वृक्षजात्यादि-भेदाज्ज्ञेयाश्चतुर्विधाः।
क्षुलनी चतुर्विधा तेषां तनुः स्थूलाः मृदुः खराः ॥ ३० ॥
चतुर्विधानां भूपानां क्रमतः संप्रकाशिताः।
अत्रापि नानाकृतिता ज्ञेया शिल्पि-विनिर्म्मिताः ॥ ३१ ॥
जन्तुलोमोद्भवं वस्त्रं लोमजं नाम कीर्त्त्यते।
मृगादयस्तु ते ब्रह्म-क्षत्र-विट्-शूद्र संज्ञकाः ॥ ३२ ॥
सूक्ष्मरोमा सुखस्पर्शः कोमलाङ्गस्तु यद्भवेत्।
ब्रह्म-जातिरयं जन्तुरस्य वस्त्रं गुणोत्तरम् ॥ ३३ ॥
स्थूलरोमा मृदुस्पर्शः क्षत्रियः सोऽपि निर्भयः।
सूक्ष्मरोमा खरस्पर्शः शूद्र-सञ्ज्ञः(ज्ञ:) सुखच्छिदः ॥ ३४ ॥
यथापूर्वं गुणयुता चिरसंस्थान-संस्थिताः।
ब्राह्मणो मलयेमेरौ हिमाद्रावपि जायते ॥ ३५ ॥
क्षत्रियः पश्चिमे देशे वैश्यः पूर्वदिशिस्थितः।
शूद्रः सर्वत्र जायेत प्रायसो वा युगक्रमात् ॥ ३६ ॥
एकजाति-भवं भद्रं द्वैजातं सुखसम्पदे।
त्रिचतुर्जाति-सम्भूतं लोमजं न सुखावहम् ॥ ३७ ॥
इत्थं निश्चित्य यो वस्त्रं परिधातुर्म्महीपतिः।
तस्यायुश्च कुलं वीर्यं वैपरीत्य मतोऽन्यथा ॥ ३८ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ-(इत्युपकरणयुक्तिः)
वस्त्रोद्देशः ॥

—*—

## अथालङ्कार-युक्तिः ।

### तद्धारणा-दिनमुच्यते ।

रेवत्यश्विधनिष्ठासु हस्तादिष्वपि पञ्चसु ।
गुरुशुक्रबुधस्याह्नि वस्त्रालङ्कार-धारणम् ॥ ३९ ॥
अनिष्टेष्वपि निर्दिष्टं वस्त्रालङ्कार-धारणम् ।
उद्वाहे राजसम्माने ब्राह्मणानाञ्च सम्मते ॥ ४० ॥
शिरस्त्रं मुकुटं हारः कुण्डलं चाङ्गदस्तथा ।
कङ्कणं वालकञ्चैव मेखलाष्टाविति क्रमात् ॥ ४१ ॥
प्रधानभूषणान्येषु यथास्वं(१)याति निश्चयः ? ।
पद्मरागश्च वज्रञ्च विजयो गोविद(२)स्तथा ॥ ४२ ॥
मुक्ता-वैदूर्य्य नीलञ्च यथा मरकतं क्रमात् ।
आदित्यादि-दशाजानां सर्व्व-सम्पत्ति-दायकाः ॥ ४३ ॥
सुवर्णेनापि घटना सर्वेषामुपयुज्यते ।
प्रधान-भूषणेष्वेव अप्रधानेन निर्णयः ॥ ४४ ॥
प्रधान-भूषणं प्रायः(३)शिरसोह्यभिधीयते ।
तस्य प्रधानभूतत्वा दित्याह 'भृगु नन्दनः' * ॥ ४५ ॥
सुखदा मणयः (४) शुद्धा दुःखदा दोष-शालिनः ।
अतो मणीनां वक्ष्यामि लक्षणानि यथाक्रमम् ॥ ४६ ॥

[ इत्यलङ्कार-धृतिनियमः ॥ ]

---

( १ ) यथाश्वत् तानि इति (क)—(ग) पुस्तक पाठः ।
( २ ) गोविदास्तथा इति (क) पुस्तक पाठः ।
( ३ ) -प्राय इतःपरं श्लोकार्द्धं (ग) पुस्तके नास्ति ।
( ४ ) मुनयः इति (ग) पुस्तक पाठः ।

---

* भार्गवः शुक्राचार्य्यः शुक्रनीति-प्रणेति यावत् । तस्मिन्नपि शुक्रनीतौ विषयोऽयमस्ति ।

## अथ वज्रलक्षणानि * ।

गरुड़पुराणे,—

वक्ष्मि परीक्षां रत्नानां वलो † नामाऽसुरोऽभवत् ।
इन्द्राद्या निर्जितास्तेन निर्ज्जेतुं तैर्न शक्यते ॥ ४७ ॥
वरव्याजेन पशुतां याचितः समुरैर्मखे (५) ।
वलो लोकापकाराय देवानां हितकाम्यया ॥ ४८ ॥
तस्य सत्व-विशुद्धस्य सुविशुद्धेन कर्म्मणा ।
कायस्यावयवाः सर्वे रत्न-वीजत्वमाप्नुयुः ॥ ४९ ॥
देवानामथयक्षाणां सिद्धानां पवनाशिनाम् ।
रत्न-वीजः स्वयं ग्राह्यः समहानभवत् तदा ॥ ५० ॥
ततः संपततां वेगाद्विमानेन विहायसा ।
यद्वै पपात रत्नानां वीजं क्वचन किञ्चन ॥ ५१ ॥
इत्यादि वाहुल्यन्तथा ।

---

## अथ गणना ।

विष्णुधर्मोत्तरे,—

वज्रं मरकतञ्चैव पद्मरागञ्च मौक्तिकम् ।
इन्द्रनीलं महानीलं वैदुर्य्यं गन्धसंज्ञकम् (*) ॥ ५२ ॥

---

(५) समुवै सुखे इति (क)-(ग) पुस्तक पाठः ।

* तन्त्रसारेऽन्यथास्ति,—

मुक्तामाणिक्य वैदुर्य-गोमेदान् वज्रविद्रुमौ ।
पुष्परागं मरकतं नीलञ्चेति यथाक्रमम् ॥

---

* अग्निपुराण-शुक्रनीति-वृहत्संहिता-गरुड़पुराण-अगस्तिमत-भावप्रकाशादिषुवज्रमुक्तादीनां लक्षणमस्ति ।

† वलीनामासुरः, तथाच मार्कण्डेयपुराणे—"वलवान् वलसम्भतः" इति ।

चन्द्रकान्तं सूर्य्यकान्तं स्फाटिकं पुलकन्तथा ।
कर्केतं पुष्परागञ्च तथा ज्योतीरसं द्विज ! ॥ ५३ ॥
स्फाटिकं राजव(ा)र्त्तञ्च तथाराजमयं शुभम् ।
सौगन्धिकं तथा गन्ध (ञ्जं) शङ्ख ब्रह्ममयन्तथा ॥ ५४ ॥
गोमेदं रुधिराख्यञ्च तथा भल्लातकं द्विज ।
धूली मरकतञ्चैव तुत्थकं सीसमेव च ॥ ५५ ॥
पीलुं(तं) प्रवालकञ्चैव गिरिवज्रञ्चभास्करम् (६) ।
भुजङ्गममणिश्चैव तथा वज्रं मणिः शुभः ।
तित्तिरञ्च (७) तथा पीत्त( तं) भ्रामरञ्च तथोत्पलम् ॥५६॥
वज्रान्येतानि सर्वाणि धार्य्यान्येव महीभृता * ।
सुवर्ण-प्रतिबद्धानि जयारोग्य-समृद्धये ॥ ५७ ॥

———*———

## तत्रादौ पद्मराग-परीक्षा ।

सिंहले तु भवेद्रत्नं पद्मरागमनुत्तमम् ।
पीतं काल(ण)पुरोद्भूतं कुरुविन्दमिति स्मृतम् ॥ ५८ ॥
अशोकपल्लवच्छायममुं(नं) सौगन्धिकं विदुः ।
तुम्बुरेच्छाययानीलं नीलगन्धि-प्रकीर्त्तितम् ॥ ५९ ॥
उत्तमं सिंहलोद्भूतं निकृष्टं तुम्बुरोद्भवम् ।
मध्यजं(म) मध्यमं ज्ञेयं माणिक्यं चेत्रभेदतः ॥ ६० ॥

---

(६) भार्गव, (भाङ्करम्) इति (ख) पुस्तक पाठः ।
(७) तित्तिभश्चइति (ख) पुस्तक पाठः ।

---

* "द्विपेन्द्रजीमूतवराहशङ्खमत्स्या हि शुक्त्युद्भव-वेणुजानि मुक्ताफलानि"...इति मल्लिनाथः ॥

तथा च,—

वन्धूक गुञ्जो सकलेन्द्रगोप,
जवासनासृक्समवर्णशोभा ।
भ्राजिष्णवो दाड़िम-वीजवर्णा ;
स्तथापरे किंशूकपुष्पभासा: ॥ ६१ ॥

सिन्दूरपद्मोत्पलकुङ्कुमानां,
लाक्षारसस्यापि समानवर्णाः ।
सान्द्रे निरागे प्रभया स्वयैव ;
भान्ति स्वलक्ष्म्या स्फुटमध्यशोभाः ॥ ६२ ॥

भानोः सुभासा मनू(८) वोधयोग,
मासाद्यरश्मि-प्रकरेण दूरं ;
पार्श्वाणि सर्व्वानुपरञ्जयन्ति ;
गुणोपपन्नाः स्फटिक प्रसूताः ॥ ६३ ॥

कुसुम्भनीलद्युति-रागमिश्राः,
प्रत्यग्ररक्ताम्बर(स) तुल्यभासः ।
तथापरे कच्चर-कण्टकारी ;
पुष्पार्ब्बिषो हिङ्गुलकत्त्विषोऽन्ये ॥ ६४ ॥

चकोरपुंस्कोकिल-सारसानां,
नेत्रावभासो द्युतयश्च केचित् ।
अन्ये पुनर्नीति विपुष्पितानां ;
तुल्य-त्विषः कोकनदोदराणाम् ॥ ६५ ॥

प्रभाव-काठिन्य-गुरुत्व-योगैः,
प्रायः समानाः स्फटिकोद्भवानाम् ।

---

(८) मनुवेर इति (ख) पुस्तक पाठः ।

नीलरक्तोत्पल-चारु भासः ;
सौगन्धिकाख्या मणयो (९) भवन्ति ॥ ६६ ॥
यो मन्दराजः कुरुविन्दजेषु,
स एव जातः स्फटिकोद्भवेषु ।
निरर्च्चिषोऽन्तर्बहुलो भवन्ति ;
प्रभाव-वन्तो हि न तत् समानाः ॥ ६७ ॥

ये तु वारण-गङ्गायां जायन्ते कुरुविन्दकाः ।
पद्मरागा घनं रागं बिभ्राणाः सस्फुटार्च्चिषः ॥ ६८ ॥
वर्णानुयायिनस्तेषां मन्ध्र(द्र)देशांस्तथापरे ।
जायन्ते यत्र ये केचित् मूल्यलेशमवाप्नुयुः (१०) ॥६९॥
तथैव स्फाटिकोत्थानां देशे तुम्बुरु संज्ञके ।
समरागाः प्रजायन्ते तेषान्तु कथितन्त्विदम् ॥ ७० ॥
तथा च,—
माणिक्यस्य प्रवक्ष्यामि यथाजाति-चतुष्टयम् ।
ब्रह्म-क्षत्रिय-वैश्याश्च शूद्रश्चाथ यथाक्रमम् ॥ ७१ ॥
रक्तश्वेतो भवेद्विप्रस्त्वतिरक्तश्च क्षत्रियः ।
रक्तपीतो भवेद्वैश्यो रक्तनीलस्तथान्त्यजः ७२ ॥
पद्मरागो भवेद्विप्रः कुरुविन्दस्तु वाहुजः ।
सौगन्धिको भवेद्वैश्यः मांस-खण्डस्तथान्त्यजः ॥ ७३ ॥
शोणपद्म-समाकारः खदिराङ्गार-सप्रभः ।
पद्मरागो द्विजः प्रोक्तः छाया भेदेन सर्वदा ॥ ७४ ॥
गुञ्जा-सिन्दुर-बन्धूक-नागरङ्ग-समप्रभः ।
दाड़िमी-कुसुमाभासः कुरुविन्दस्तु वाहुजः ॥ ७५ ॥

---

(९) मलयो भवन्ति इति (ग) पुस्तक पाठः ।
(१०) समयाप्नुयुः इति (क)-(ग) पुस्तक पाठः ।

हिङ्गुलाशोक-पुष्पाभ मीषत्पीतन्तु लोहितम् ।
जपालाक्षारस-प्राय वैश्यं सौगन्धिकं विदुः ॥ ७६ ॥
आरक्त-कान्तिहीनश्च चिक्कणश्च विशेषतः ।
मांसखण्डसमाभासोऽन्त्यजः पापनाशनः ॥ ७७ ॥
मांसखण्डस्तु नीलगन्धेः संज्ञा * ।

——००——

## अथ दोषाः [तेषाम्वज्रादीनाम् ] ।

माणिक्यस्य समाख्याता अष्टौ दोषा मुनीश्वरैः ।
विच्छायश्च वि(द्वि)रूपश्च सम्भेदः कर्करस्तथा ॥ ७८ ॥
अशोभनं कोकिलश्च जलं धूम्राभिधश्च वै ।
गुणाश्चत्वार आख्याताश्छायाः षोड़शकीर्त्तिताः ॥ ७९ ॥
छायास्तु पूर्व्वोक्ता एव ग्राह्याः ।
छाया हितयसम्बन्धाद् हिच्छायं बन्धुनाशनम् ।
हिरूपं हिपदन्तेन माणिक्येन पराभवः ॥ ८० ॥
सम्भेदो भिन्नमित्युक्तं शस्त्रघात-विधायकाः ।
कर्करं कर्करायुक्तं पशुबन्धु-विनाशकृत्॥ ८१ ॥
दुग्धेनैव समालिप्तं लम्बनी पुटमुच्यते ।
अशोभनं समुद्दिष्टं माणिक्यं बहुदुःखकृत् ॥ ८२ ॥
मधु-विन्दु-समच्छायं कोकिलं परिकीर्त्तितम् ।
आयुर्लक्ष्मीं यशो हन्ति सदोषं तनुधारयेत् (१४) ॥ ८३ ॥
रागहीनं जलं प्रोक्तं धनधान्यापवादकृत् ।
धूम्रं धूम्रसमाकारं वैद्युतं भयमावहेत् ॥ ८४ ॥

( १४ ) तनूराधयेत् (वाधयेत्))इति (क)-(ग) पुस्तक पाठः ।

मांसखण्डरूपत्वात्तस्य नीलगन्धे मांसखण्ड इत्यभिधानम् ।

तथा,—

शोभाद्वितयवन्तो ये मणयः क्षिति-कारकाः (१५)।
उभयत्र पदं येषां तेन च स्यात् पराभवः॥ ८५॥
भिन्नेन युद्धे मृत्युः स्यात्कर्करं धन-नाशनात्।
दुग्धेनेव समालिप्तः पुटके यस्तु सम्भवेत्॥ ८६॥
दुःखजनक समाख्यातो न नृपैः रक्षणीयकः।
मधुविन्दु-समा शोभा कोकिलानां प्रकीर्त्तिताः॥ ८७॥
तेषाञ्च बहुभेदाः स्युः न ते धार्य्याः कदाचन॥ ८८॥

अथ गुणाः [तेषाम्बज्रादीनाम्]।

गुरुत्वं स्निग्धतां चैव वैमल्य(न्य)मतिरक्तता।
वर्णादिकं गुरुत्वञ्च स्निग्धता च तथाच्छता॥
अर्च्चिष्मत्तामहत्ता च मणीनां गुणसंग्रहः॥ ८९॥

अथ फलम्।

ये कर्कराः छिद्रमयोपदिग्धाः,
प्रभाविमुक्ताः पुरुषाविवर्णाः।
न ते प्रशस्ता मणयो भवन्ति;
समासतो जातिगुणैः समस्तैः॥ ९०॥
दोषोपसृष्टं मणिमप्रवोधा,
द्विभर्त्ति यः कश्चन कश्चिदेकम्।
तं(तद्) वन्धुदुःखाय सवन्धुवित्त-
नाशादयो दोष-गुणा भजन्ते॥ ९१॥
सपत्न-मध्ये हि कृताधिवासम्,
प्रमादवृत्तावपि वर्त्तमानम्।

---

(१५) क्षतिकारकाः इति (क)-(ग) पुस्तक पाठः।

न पद्मरागस्य महागुणस्य ;
भर्त्तारमापत् समुपैति काचित् ॥ ९२ ॥
दोषोपसर्ग-प्रभवाश्च ये ते,
नोपद्रवास्तं समभिद्रवन्ति ।
गुणैः समुच्चैः सकलैरुपेतम् ;
यः पद्मरागं प्रयतो बिभर्त्ति ॥ ९३ ॥
बालार्क-करसंस्पर्शाद् यः शिखां लोहिताम्बमेत् (१६)।
रञ्जयेदाश्रमम्बापि स महा गुण उच्यते ॥ ९४ ॥
दुग्धे शतगुणे क्षिप्ता रञ्जयेद् स समन्ततः।
वमेच्छिखां लोहिताम्बा पद्मरागः स उत्तमः ॥ ९५ ॥
अन्धकारे महाघोरे यो न्यस्तः सन् महामणिः।
प्रकाशयति सूर्य्याभः स श्रेष्ठः पद्मरागकः ॥ ९६ ॥
पद्मकोषे तु यन्न्यस्तं विकाशयति तत्क्षणात् ।
पद्मरागवरो ह्येषः देवानामपि दुर्लभः ॥ ९७ ॥
सर्वारिष्ट-प्रशमनाः सर्व्वसम्पत्ति-दायकाः।
चत्वारस्तु मयोद्दिष्टा गुणिनश्च यथोत्तरम् ॥ ९८ ॥
यो मणिर्दृश्यते दूराद् ज्वलदग्निसमच्छविः।
वंश-कान्तिः स विज्ञेयः सर्व्वसम्पत्ति-दायकः ॥ ९९ ॥
पञ्चसप्त-नव विंशतिः राग-सकलः खलु (स्वर्ण) वस्त्रे ।
वर्ज्जयेद्दमति वा करजालं उत्तरोत्तर-महागुणिनस्ते ॥ १०० ॥
नीलीरसं दुग्धरसं जलम्बा,
ये रञ्जयन्ति द्विशतं प्रमाणम् ।
ते ते यथा पूर्व्वमति प्रशस्ताः ;
सौभाग्यसम्पत्ति-विधान-दायकाः ॥ १ ॥

(१६) लोहिताम्बसेत् (च्छुसेत्) इति (क) पुस्तक पाठः।

गुञ्जाफल-प्रमाणस्तु दशसप्तत्रिगुञ्जकान् ।
पद्मरागस्तु नयति यथापूर्व्वं महागुणः ॥ २ ॥
क्रोष्टुकोण फलाकारान् द्वादशाष्टाद्विगुञ्जकान् ।
पद्मरागस्तु नयति यथापूर्व्वं महागुणः * ॥ ३ ॥
वदरीफल तुल्यो यः सुर दिग्-वसु-मासकः ।
धात्रीफलश्च त्रिंशच्च विंशति-द्वाष्ट-मासकः ॥ ४ ॥
तथाश्वोफल तुल्यो यः वह्निपञ्चैक मासकः ।
ताम्बुलफलमानो यश्चतुस्त्रि-द्विक-तोलकः ॥ ५ ॥
विल्वो(ल्वो)फलसमाकार-वसु-षट्दश-तोलकः ।
अतःपरं प्रमाणेन मानेन च न लच्य(भ्य)ते ॥ ६ ॥
यदि लभे(भ्ये)त पुण्येन तदा सिद्धिमवाप्नुयात् ।
केचिच्चाकृतरा: सन्ति जात्यानां प्रतिरूपकाः ॥ ७ ॥
विजातयः प्रयत्नेन विद्वास्तान् मूल(स)माहरेत् (१८) ॥८॥
कोङ्कनकाः (१९) सिंहलदेशोत्थ-मुक्तमालीयाः ।
श्रीपर्णीकाश्च सदृशा विजातयः पद्मरागाणाम् ॥ ९ ॥

तुषोपसङ्गाङ्कल(२०)माभिधानम्,
मणिः स्वभावादपि तुम्बुरुत्थः ।
कार्णग्रोत्तथा सिंहल-देशजातम् ;
मुक्ताभिधानं नभसः स्वभावात् ॥ १० ॥
श्रीपर्णकं दीप्ति-निराकृतित्वा,
द्विजाति-लिङ्गाश्रयभेद एषः ॥ ११ ॥

---

(१८) -स्तां नूनसमाहरेत् इति (क) पुस्तक पाठः ।
(१९) काञ्चानका इति (क) पुस्तक पाठः ।
(२०) तुषोपमर्हाङ्गल- इति (क)-(ग) पुस्तक पाठः ।

तथाच,—स्नेहप्रदेहो मृदुतालघुत्वं,

विजाति-लिङ्गं खलु सार्व्वजन्यम्।

यः श्यामिकां पुष्यति पद्मरागो ;

यो वा तुषाणां इव चूर्ण-मध्यः ॥ १२ ॥

स्नेह-प्रदिग्धो नच यो विभाति,

यो वा प्रमृज्यं(ष्टं) प्रजहाति दीप्तम्।

आक्रान्त मूर्द्धा च तथाङ्गुलीभ्याम् ;

यः कालिकां पार्श्वगता (ं) विभर्त्ति ॥ १३ ॥

संप्राप्यतां (२१) चोपपथं स्ववृत्तम्,

विभर्त्ति यः सर्व्वगुणामतीव।

तुल्य प्रमाणस्य च तुल्य जाते ;

यो वा गुरुत्वेन भवेन्न तुल्यः ॥ १४ ॥

प्राप्यापि नानाकरदेशजातम्,

ज्ञात्वा वुधो जाति गुणेन लक्षेत् ॥ १५ ॥

अप्रणश्यति सन्देहे शिलायां परिघर्षयेत्।

दृष्टो योत्यन्तशोभावान् गरिमानं न मुञ्चति ॥ १६ ॥

सज्ञेयः शुद्धजातिस्तु ज्ञेयास्वान्ये विजातयः।

स्व-जातक-संमुखेन विलिखेद्वा परस्परम् ॥ १७ ॥

वज्रं वा कुरुविन्दं वा विमुच्यान्योन्य केनचित्।

न शक्यं लेखनं कर्त्तुं पद्मरागेन्द्र-नीलयोः ॥ १८ ॥

जातस्य सर्वेऽपि मणेर्न जातु,

विजातयः कान्ति-समान-वर्णाः।

तथापि नाना करणार्थमेवम् ;

भेद-प्रकारः परमः प्रदिष्टः ॥ १९ ॥

---

(२१) प्राप्यचाण्योपि इति (क)-(ग) पुस्तक पाठः

गुणोपपन्नेन सहावबद्धो,
मणिस्त्वधार्य्यो विगुणेन जात्यम् ।
सुखं न कुर्य्यात् अपि कौस्तुभेन (१) ;
विद्वान् विजातिं बिभृयात् कदाचित् (२) ॥२०॥

चण्डाल एकोऽपि यथा विजातीन्,
समेत्य भूरीन् अपहन्ति यत्नात् ।
तथा मणीन् भूरि गुणोपपन्नान् ;
शक्नोति विद्रावयितुं विजातम् ॥ २१ ॥

—*—

## अथ वज्रादीनां मूल्यम् ।

वालार्काभिमुखं कृत्वा दर्पणे धारयेत् मणीन् ।
तत्र कान्तिविभागेण छाया भागं विनिर्दिशेत् ॥ २२ ॥

वज्रस्य यत् तण्डुलसंख्ययोक्तम्,
मूल्यं समुन्मापित गौरवस्य ।
तत् पद्मरागस्य तुणान्वितस्य ;
स्यान्माषकाख्या तुलितस्य मूल्यम् ॥ २३ ॥

यन्मूल्यं पद्मरागस्य सगुणस्य प्रकीर्त्तितम् ।
तावन्मूल्यं तथा शुद्धे कुरुविन्दे विधीयते (३) ॥ २४ ॥
सगुणे कुरुविन्दे च यावन्मूल्यं प्रकीर्त्तितम् ।
तावन्मूल्य-चतुर्थांशं हीनं स्याद्वै सुगन्धिके ॥ २५ ॥

---

(१) न कौस्तुभे नापि सहावबद्धम् इति (ग) पुस्तक पाठः ।
(२) विद्वान् विजातिं न भृयाद्‌धवलं इति (क) पुस्तक पाठः ।
(३) तथाशुद्धैः कुरुविन्दैः इति (ख) पुस्तक पाठः ।

यावन्मूल्यं समाख्यातं वैश्यवर्णे च सूरिभिः ।
तावन्मूल्यं चतुर्थांशं हीयते शूद्रजन्मनि ॥ २६ ॥
पद्मरागः पणं यस्तु धत्ते लाक्षारस-प्रभः ।
कार्षापण-सहस्राणि त्रिंशन्मूल्यं लभेत सः ॥ २७ ॥
इन्द्रगोपक संकाशः कर्षत्रय-धृतो-मणिः ।
द्वाविंशतिं सहस्राणां तस्य मूल्यं विनिर्दिशेत् ॥ २८ ॥
एकोनोनूयते यस्तु जवाकुसुम-सन्निभः ।
कार्षापण-सहस्राणि तस्य मूल्यं चतुर्दश ॥ २९ ॥
बालादित्य द्युति-निभं कर्षं यस्तु प्रतुल्यते ।
कार्षापण-शतानान्तु मूल्यं सद्भिः प्रकीर्त्तितम् ॥ ३० ॥
यस्तु दाड़िम-पुष्पाभः कर्षार्द्धेन तु सम्मितः ।
कार्षापण शतानान्तु विंशतिं मूल्यमादिशेत् ॥ ३१ ॥
चत्वारो माषका यस्तु रक्तोत्पल-दल-प्रभः ।
मूल्यं तस्य विधातव्यं सूरिभिः शत-पञ्चकम् ॥ ३२ ॥
द्विमाषको यस्तु गुणैः सर्वैरेव समन्वितः ।
तस्य मूल्यं विधातव्यं द्विशतं तत्त्ववेदिभिः ॥ ३३ ॥
माषकैक-मितो यस्तु पद्मरागो गुणान्वितः ।
शतैक-सम्मितं वाच्यं मूल्यं रत्न-विचक्षणैः ॥ ३४ ॥
अतोऽन्यून-प्रमाणास्तु(न्तु) पद्मरागा गुणोत्तराः ।
स्वर्ण-द्विगुण मूल्येन मूल्यं तेषां प्रकल्पयेत् ॥ ३५ ॥
कार्षापणः समाख्यातः पुराणद्वय-सम्मितः ।
अन्ये कुसुम्भ-पानीय-मञ्जिष्ठोदक-सन्निभाः ॥ ३६ ॥
काषाया इति विख्याताः स्फटिक-प्रभवास्तते ।
तेषां दोषान् गुणान् वापि पद्मराग-वदादिशेत् ॥ ३७ ॥
मूल्यमल्पन्तु विज्ञेयं कारणेऽल्पफलन्तथा ।

ब्रह्म-क्षत्रिय-वैश्यान्त्याश्चतुर्धा ये प्रकीर्त्तिताः ॥ ३८ ॥
चतुर्विधै-र्नृपतिभिर्धार्याः सम्पत्ति-हेतवे ।
अतोऽन्यथाधृतः कुर्य्याद्रोगशोक-भयक्षयम् ॥ ३९ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ
पद्मराग-परीक्षा ॥

——— ०० ———

## अथ हीरकपरीक्षा * ।

गारुड़े,—
हेम-मातङ्ग-सौराष्ट्राः पौण्ड्र-कालिङ्ग-कोशलाः ।
वेखा(ख्वा) तटाः स सौवीरा वज्रस्याष्टौ विहारकाः ।४०॥
आताम्रा हिमशैलजाः शशिनिभा वेखातटीया मताः,
सौवीरे तु सिताब्ज मेघसदृशास्ताम्राश्च सौराष्ट्रजाः ।
कालिङ्गाः कनकावदातरुचिराः पीत-प्रभाः कोशले ;
श्यामाः पुण्ड्रभवा मतङ्गविषये नात्यन्त-पीतप्रभाः ॥ ४१ ॥
कृतयुगे कलियुगे कोशले वज्र-सम्भवः
हिमालये मतङ्गाद्रौ त्रेतायां कुलिशोद्भवः ॥ ४२ ॥
पौण्ड्रके च सुराष्ट्रे च द्वापरे परि-सम्भवः ।
वैरागरे च सौवीरे कलौ हीरक-सम्भवः ॥ ४३ ॥
पृथिव्यपो-वियत्तेजो मरुच्चैवेति पञ्चभिः ।
पञ्चभूतात्मकं वज्रं तैजसं प्रायसो भवेत् ॥ ४४ ॥
महापुराणं स्वदनं सुशोभं पार्थिवं विदुः ।
स्निग्धं मृदु-घनं स्वच्छमाप्यमाहुः परं वुधाः ॥ ४५ ॥

---

* वज्र ( हीरक )-वृत्तान्तु गरुड़पुराण-वामनपुराण भागवत-मत्स्यपुराण-राजनिर्घण्ट-भावप्रकाशादिषु द्रष्टव्यम् ।

विमलं शुचितीक्ष्णाग्रं वैयतं वज्रमुच्यते ॥
सुतीक्ष्णं दीप्तिमत् स्वच्छं तैजसं वज्रमुच्यते ॥ ४६ ॥
लघुतीक्ष्णः खरस्पर्शो वायव्यः परिकथ्यते ।
ब्रह्म-क्षत्रिय-विट्-शूद्रा भेदास्ते तु चतुर्विधाः ॥ ४७ ॥
श्वेता रक्ता तथा नीला कृष्णा छाया चतुर्विधाः ।
ब्रह्म-क्षत्रिय-विट्-शूद्र-जातेर्वज्रस्य विक्रमात् ॥ ४८ ॥

गारुड़े,—

विप्रस्य शङ्ख-कुमुदस्फटिकावदातः,
स्यात्क्षत्रियस्य शशवभ्रविलोचनाभः ।
वैश्यस्य कान्त-कदली-दलसन्निकाशः ;
शूद्रस्य धौत-करवाल-समानदीप्तिः ॥ ४९ ॥

हरित-सित-पीत-पिङ्ग-श्यामा-ताम्राः स्वभावतोरुचिराः ।
हरिवरुण-शक्र हुतवह-पितृपति मरुतां स्वका वर्णाः ॥ ५० ॥

द्वौ वज्रवर्णौ पृथिवीपतीनाम्,
सद्भिः प्रतिष्ठौ नतु सार्वजन्यौ ।
यः स्याज्जवाविद्रुम-भङ्गशोणो ;
यो वा हरिद्रा-रससन्निकाशः ॥ ५१ ॥

ईशत्वात् सर्ववर्णानां गुणवत् सार्ववर्णिकम् ।
कामतो धारयेद् राजा नत्वन्योन्यं कथञ्चन ॥ ५२ ॥

अथ गुणाः—[ गारुड़े ] ।

कोट्यः पार्श्वानि धाराश्च षडष्टौ द्वादशेति च ।
उत्तुङ्ग सम तीक्ष्णाग्रा वज्रस्याकरजा गुणाः ॥ ५३ ॥
षट्कोणकं लघुत्वञ्च समाष्टादश(ल)ता तथा ।
तीक्ष्णाग्रता निर्म्मलत्व मेते पञ्चगुणा मताः ॥ ५४ ॥

अत्यर्थं लघुवर्णतस्य गुणवत् पार्श्वेषु सम्यक्स्थितम्,
रेखाविन्दुकलङ्क-काकपदक-त्रासादिभिर्वर्जितम् ।
लोकेऽस्मिन् परमाणुमात्रमपि यद् वज्रं क्वचिद् दृश्यते ;
तस्मिन्देवसमाश्रयो ह्यवितथं तीक्ष्णाग्रधारं यदि ॥ ५५ ॥

षट्कोटि-शुद्धममलं स्फुटतीक्ष्णधारम्,
वर्णान्वितं लघुसुपार्श्वमपेत-दोषम् ।
इन्द्रायुधांशु-विसृति क्रुरितान्तरीक्षम् ;
एवंविधं भुवि भवेत् सुलभं न वज्रम् ॥ ५६ ॥

प्रसुते कान्तसन्निभं शक्रायुध-समां शिखाम् ।
अत्यन्त लघुतीक्ष्णाग्रं तद्वज्रं वज्र-धारणम् ॥ ५७ ॥

विष्णुधर्म्मोत्तरे,—( अग्निपुराणे च ) ।

अश्मसारति यद्वज्रं अभेद्यं विमलञ्च यत् ।
सत्कोणं शक्रचापाभं लघुचार्कनिभं शुभम् ॥
तथा संशुद्ध षट्कोणं लघु भार्गव-नन्दन ! ॥ ५८ ॥
प्रभा च शक्रचापाभा यस्यार्काभिमुखी भवेत् ।
तद्वज्रं धारयेद्राजा सर्वान् जयति शात्रवान् ॥ ५९ ॥

तथा च,—

यस्तु वारि-भवो नाम दुर्वापत्र-जलच्छविः ।
सुवर्णमात्रं तुलया (१) तद्वज्रं कोटि-भाजनम् ॥ ६० ॥
ऊर्द्धं निवारयेद्वज्रमधः सर्पान्निवारयेत् ।
रात्रौ निवारयेद्भूतान् हीरकस्यैव धारणात् ॥ ६१ ॥

तीक्ष्णाग्रं विमलमपेत सर्वदोषम्,
धत्ते यः प्रयततनुः सदैव वज्रम् ।

---

( १ ) गणयेत् इति (क) पुस्तक पाठः ।

वृद्धिस्तं प्रतिदिनमेति यावदायुः ;

श्रीसम्पद्युत धन-धान्य-गो-पशूनाम् ॥ ६२ ॥

व्यालवह्नि-विषव्याघ्र तस्कराद्यभयानि च।

दूरादेव निवर्त्तन्ते कर्म्मण्याथर्वणानि च ॥ ६३ ॥

यत्तु सर्वगुणैर्युक्तं वज्रं तरति वारिणि।

रत्नवर्गे समस्तेऽपि तस्य धारणमिष्यते ॥ ६४ ॥

यद्यपि विशीर्ण-कोटिः सविन्दु-रेखान्वितो विवर्णो।

तदपि च धनधान्य-सुतान् करोति सेन्द्रायुधो वज्रः ॥ ६५ ॥

सौदामिनी-विस्फुरिताभिरामम्,

राजा यथोक्तं कुलिशं दधानः।

पराक्रमाक्रान्त-पर-प्रतापः ;

समस्तसामन्त-भुवं भुनक्ति ॥ ६६ ॥ (इति गारुड़े)।

समस्तां पृथिवीं पाति पार्थिवस्य विधारणात्।

वृद्धिर्लक्ष्मीर्यशः कीर्त्तिरायुर्वज्रस्य धारणात् ॥ ६७ ॥

उत्साहः प्रियतुष्टित्वं विप्रणाशनमेव च।

तथा सम्पत्तयः सर्वा वैयेते परिधारिते (२) ॥ ६८ ॥

प्रतापः शौर्य्यमुत्साहः तेजसस्य विधारणात्।

यज्ञैर्दानं तपोभिश्च यदाप्नोति तदाप्नुयात् ॥ ६९ ॥

गुणयुक्तस्य वज्रस्य विप्रजातेर्विधारणात्।

जयः पराक्रमस्तस्य शत्रुनाशश्च जायते ॥ ७० ॥

गुणवत्-क्षत्रजातीनां वज्रं वसति यद्गृहे।

कलाकुशलताद्रव्यं प्रज्ञा क्षेमं यशो महत् ॥ ७१ ॥

गुणिनः परिरतस्य वैश्यजातेर्विधारणात्।

परोपकारिता क्षेमं धन-धान्य-समृद्धयः ॥ ७२ ॥

---

(२) परिधारणात् इति (ख) पुस्तके पाठः।

गुणयुक्तस्य वज्रस्य शूद्रजातेर्विधारणात् ।
अन्यच्चतुर्विधं वज्रं प्रवदन्ति पुरातनाः ॥ ७३ ॥
हिमकुन्देन्दुधवलं षट्कोणाष्टदलन्तथा ।
तीक्ष्णं वारिभवं वज्रं घनशब्देति कान्तिमत् ॥ ७४ ॥
अन्धकारे च दीप्येत तज्ज्ञेयं वज्रधारणम् ।
गुणाढ्यं तीक्ष्णधारं यत् सर्प-दर्प-निवारणम् ॥ ७५ ॥
तस्य धारणतो येन विषरोगः प्रशाम्यति ।
सूर्यकोटि-प्रतीकाशं चन्द्रकोटि-सुशीतलम् ॥ ७६ ॥
अन्धकार-हरं वज्रं विज्ञेयं मद्दुत्तमम् ।
तस्य धारणतोयेन सर्वरोगः प्रशाम्यति ॥ ७७ ॥
तप्ते दुग्धे जले तैले घृते क्षिप्तोऽपि यः परि ।
शीततां नावहेत् (२) सद्यः संज्ञेयः सुरदुर्लभः ॥ ७८ ॥
एषामन्यतरं लब्ध्वा नृपः सुखमवाप्नुयात् ।
तत्तु त्रिभुने नास्ति यत्र धारयते नृपः ॥ ७९ ॥

अथ दोषाः ।

मलो विन्दुस्तथा रेखा त्रासः काकपदस्तथा ।
एते दोषाः समाख्याताः पञ्चवज्रेषु कोविदैः ॥ ८० ॥
मले मलिनता ख्याता विन्दौ सर्वार्थ-नाशनम् ।
रेखायां दंष्ट्रिणो भीतिस्त्रासे त्रासः क्षयः पदे ॥ ८१ ॥
मले मलिनता ख्याता रेखायां दंष्ट्रिणो भयम् ।
कोणे व्याधि-भयं प्रोक्तं मध्ये व्याधि-भयम्भवेत् ॥ ८२ ॥
दोषेषु विन्दुरावर्त्तः परिवर्त्तो यदाकृतिः ।
चतुर्द्धैवं समाख्याता विन्दवो वज्र-संश्रिताः ॥ ८३ ॥

---

(२) नावयेत् इति (ख) पुस्तक पाठः।

वज्रोऽथ वर्त्तुलो विन्दुरावर्त्तो मध्य-वर्त्तुलः।
वज्रः परिवद्ध ... ... रक्त एव यवाकृतिः॥ ८४॥
विन्दुरायुर्धनं हन्यात् दावर्त्तो वज्रमादिशेत्।
परिवर्त्ते भवेद् व्याधिर्यवे तत् फलमुच्यते॥ ८५॥
श्वेतो रक्तस्तथा पीत-श्वेतश्चेति यथा मतः।
रक्तवर्णे यवे ख्यातं गजाश्वस्य विनाशनम्॥ ८६॥
यवे पीते कुलस्यान्तं धनमायुः सिते भवेत्।
एवं दोष-गुणाः प्रोक्ताः परिविन्दोरशेषतः॥ ८७॥
सव्यवक्राः शुभा रेखा रामवक्रा भयङ्करी।
छेद भ्रान्तिकरो छेदा रेखाशस्त्र-भयप्रदा॥ ८८॥
पचद्दय प्रहृश्याया छेदा सा परिकीर्त्तिता।
रेखा वन्धु-विनाशाय जायते वज्रसंश्रया॥ ८९॥
सव्या चैवोपसव्या च छिन्ना रेखोर्द्ध्वगामिनी॥
सव्या चात्मभिदा ज्ञेया अपसव्या धनच्छिदा॥ ९०॥
ऊर्द्ध्वा चासंप्रहारायच्छिन्ना च्छेदाय वन्धुभिः।
अङ्कः काकपदाकारो दृश्यते यः पदोत्थितः॥ ९१॥
स मृत्युमादिशत्याहुः(युः) धनं वा सकलं हरेत्।
भग्नाग्रं भङ्गधारञ्च दलहीनञ्च वर्त्तुलम्॥ ९२॥
कान्तिहीनञ्च यद्वज्रं दोषाय न गुणाय तत्।
भिन्न भ्रान्ति-करन्त्रासः सत्रासं जनयेद् ध्रुवम्।
अपि सर्वगुणैर्युक्तं न तादृग् धारयेद्बुधः॥ ९३॥

अथ अन्यान्यपि।

एकमपि यस्यसैन्यं (८) शृङ्गं विदलितमवलोक्यते विशीर्णन्वा।
गुणवदपि तन्न धार्य्यं वज्रं श्रेयोऽर्थिभिर्भवने॥ ९४॥

---

(८) अत्र सैन्यं इत्यधिक पाठः (ख)-(ग) पुस्तकेऽस्ति।

स्फुटिताग्नि विशीर्ण शृङ्गदेशम् मलवर्णैः पृषतैरुपेतमध्यम् ।
न हि वज्रभृतोऽपि वज्रमाशु श्रियमन्याश्रय-नाशं विधत्ते ॥ ९५ ॥
यस्यैकदेशे क्षतजावभासो यद्वा भवेल्लोहितवर्ण-चित्रम् ।
नतत्र कुर्य्यात् म्रियमाणमाशु स्वच्छन्दमृत्योरपि जीवितान्तम् ॥ ९६ ॥
प्रथमं गुणसम्पदाभ्युपेतं प्रतिबद्धं यमुपैति यत् स दोषम् ।
सुलभाभरणेन तस्य राज्ञो गुण-हीनोऽपि मणिर्न भूषणाय ॥ ९७ ॥
यस्य क्षते भवेच्छोथो दाहो वा ज्वर एव च ।
तथा चिमचिमायेत तद्वज्रं दुष्टमुच्यते ॥ ९८ ॥
कर्कशं गुरु यद् वज्रं न तद्धारयते नृपः ।
त्रिकोणं कलहो यस्माच्चतुष्कोणं भयावहम् ॥ ९९ ॥
पञ्चकोणे भवेन्मृत्युः षट्कोणं शुद्धमादिशेत् ।
द्विदले कलहो नित्यं त्रिदले सुखनाशनम् ॥ १०० ॥
चतुष्कोणे सुखावाप्तिःशोकस्य पञ्चमे दले ।
षड्दले राजतो भीतिर्मृत्युः सप्तदले तथा ॥
अष्टदलं भवेच्छुद्धं वज्रमित्याह 'पावकः' ॥ १ ॥
विच्छायं विपदं करोति मलिनं धत्ते शुचं कर्कशम्,
दुःखं स्नेह-विलिप्तमन्तकरणं श्याम(व)च्छविः क्लेशकृत् ।
रेकाकाक-पदाङ्क-विन्दु सहितं स्यान्मृत्यवे देहिनाम् ;
वज्रं वज्रविचक्षणास्तु विभृयात्तस्माद्विचार्य्य स्वयम् ॥ २ ॥
गुर्विणीभिर्न धर्त्तव्यो युवतीभिरयं मणिः ।
जठरे वज्र-सम्पर्काद् गर्भस्तासां हि शुष्यति ॥ ३ ॥
अयसा पद्मरागेण तथा गोमेदकेन च ।
वैदूर्य्यस्फटिकाभ्याञ्च काचैर्वा(श्चा)पि पृथग्विधैः ॥ ४ ॥
प्रतिरूपाणि कुर्वन्ति वज्रस्य कुशला नराः ।
परीक्षा तेषु कर्त्तव्या विद्वद्भिः सुपरीक्षकैः ॥ ५ ॥

क्षारोल्लेखन शाणैस्तु (१०) कार्य्यं तेषां परीक्षणम्।
क्षाराग्नेर्लेपयेद्वज्रं रौद्रे चैव परीक्षयेत्॥ ६॥
कृत्रिमं याति वैवर्ण्यं स्वरूपञ्चाभिदीप्यते।
क्षीयते शाणसंसर्गात् (११) चूर्णतां याति चूर्णितम्॥ ७॥

तथा च,—

पृथिव्यां यानि रत्नानि ये चान्ये लौहधातवः।
सर्वाणि विलिखेद्वज्रं तच्च तैर्न विलिख्यते॥ ८॥
गुरुता सर्वरत्नानां गौरवाधान-कारणम्।
वज्रे तान् वैपरीत्येन सूरयः परिचक्षते॥ ९॥
न तेषां प्रतिवन्धानां भा भवत्यूर्द्ध्वगामिनी।
तिर्य्यक् क्षतत्वात् केषाञ्चित् कथञ्चिदपि दृश्यते॥ १०॥
तिर्य्यगालिख्यमानानां सा पार्श्वेष्वपि (१२) हन्यते॥ ११॥

---

## अथ मूल्यम्।

अष्टाभिः सर्षपै गौरैस्तण्डुलं परिकल्पयेत्।
तण्डुलेन तु वज्राणां धारणे मूल्यमुच्यते॥ १२॥

यदि वज्रमपेत सर्व-दोषं, विभृयात्तण्डुलविंशतिं गुरुत्वे।
मणि-शास्त्रविदो वदन्ति तस्य द्विगुणं रूपक-लक्षणमग्रमूल्यम्॥ १३॥
त्रिभागहीनार्द्ध-तदर्द्धशेषं त्रयोदशं त्रिंशदतोऽर्द्धभागाः।
अशीति भागोऽथ शतांशभागः सहस्रभागोऽल्पसमानयोगः॥ १४॥

---

(१०) शालाभिः इति (क) पुस्तक पाठः।

(११) क्षयते शाणसंघर्षात् इति (ख) पुस्तक पाठः।

(१२) सा पार्श्वेषु विहन्यते इति (ख) पुस्तक पाठः।

यत्तण्डुलैर्द्वादशभिः कृतस्य वज्रस्य मूल्यं प्रथमं प्रदिष्टम् ।
द्वाभ्यां क्रमाद्धानिमुपागतस्य त्वेकावसानस्य विनिश्चयोऽयम् ॥१५॥

अनेनापि हि (१३) दोषेण लक्ष्यालक्ष्येण दूषितम् ।
स्वमूल्याद्दशमं भागं वज्रं लभति मानवः ॥ १६ ॥
प्रकटानेकदोषस्य स्वल्पस्य महतोऽपि वा ।
स्वमूल्याच्छतशो भाग वज्रस्य न विधीयते ॥ १७ ॥
यन्मूल्यं ब्राह्मणे प्रोक्तं पादोन(१४)मपि बाहुजे ।
अनेनैव क्रमेणैव मणि-मूल्यं विधीयते ॥ १८ ॥
चतुर्विधमिदं वज्रं यदुक्तं जाति-भेदतः ।
चतुर्विधे नृपतिभिर्धार्य्यमाणादनुक्रमात् ॥
अतोऽन्यथाधृतिं कुर्य्यात् रोगशोक-भयङ्करान् ॥ १९ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ
हीरक-युक्तिः (परीक्षा) ॥

——*——

## अथ विद्रुम परीक्षा-[प्रवाल परीक्षा] ।

श्वेत-सागरमध्ये तु जायते वल्लरी तु या ।
विद्रुमा नाम रत्नाख्या दुर्लभा वज्ररूपिणी ॥ २० ॥
पाषाण-प्रभजत्येषा प्रयत्नात् कथिता सती ।
विद्रुमं नाम तद्रत्नमामनन्ति मनीषिणः ।
शङ्खादि-जातिभेदेन तच्चतुर्विधमुच्यते ॥ २१ ॥

---

(१३) अश्वनामपि दोषेण इति (क) पुस्तक पाठः ।
(१४) पादेनानेन इति (ख) पुस्तक पाठः ।

अरुणं शशरक्ताख्यं कोमलं स्निग्धमेवच ।
प्रवालं विप्रजातिः स्यात् सुखवेध्यं मनोरमम् ॥ २२ ॥
जवाबन्धूकसिन्दूरं दाड़िमी-कुसुम-प्रभम् ।
कठिनं दुर्व्वेध्यमस्निग्धं क्षत्रजातिं तदुच्यते ॥ २३ ॥
पलाशकुसुमाभासं तथापाटल-सन्निभम् ।
वैश्यजातिर्भवेत् स्निग्धं वर्णाढ्यं मन्दकान्तिमत् ॥ २४ ॥
रक्तोत्पलदलाकारं कठिनं न चिरद्युतिः ।
विद्रुमं शूद्रजातिः स्याद् वायु-वेध्यं तथैव च ॥ २५ ॥
रक्तता स्निग्धता दार्ढ्यं चिरद्युति-सुवर्णता ।
प्रवालानां गुणाः प्रोक्ताः धनधान्य-कराः पराः ॥ २६ ॥
हिमाद्रौ यत्तु संजातं तद्रक्तमतिनिष्ठुरम् ।
तत्र लिप्तो भवेन्निम्ब-कल्कोऽति मधुरः स्थिरः(तः) ॥ २७ ॥
तस्य धारण-मात्रेण विषवेगः प्रशाम्यति ।
विवर्णता तु खरता प्रवाले दूषणद्वयम् ॥ २८ ॥
रेखा काकपदौ बिन्दुर्यथा वज्रेषु दोषकृत्(कृत्) ।
तथा प्रवाले सर्व्वत्र वर्ज्जनीयं विचक्षणैः ॥ २९ ॥
रेखा हन्याद् यशोलक्ष्मीमावर्त्तः कुलनाशनः ।
पटलो रोगकृत् ख्यातो बिन्दुर्धन-विनाशकृत् ॥ ३० ॥
त्रासः सज्जनयेत्त्रासं नीलिका मृत्यु-कारिणी ।
मूल्यं शुद्ध-प्रवालस्य रौप्यद्विगुणमुच्यते ॥ ३१ ॥
धारणेऽस्यापि नियमो जाति-भेदेन पूर्ववत् ॥ ३२ ॥

तथाहि,—

विरूप-जातिं विषमं विवर्णम्,
खर-प्रवालं प्रवहन्ति ये ये ।

ते मृत्युमेवात्मनि वै वहन्ति
सत्यं वदत्येष यतो मुनीन्द्रः * ॥३३॥

इति श्रीभोजराजीये युक्तिकल्पतरौ प्रवाल परीक्षा ॥

---

## अथ गोमेद परीक्षा ।

हिमालये वा सिन्धौ वा गोमेद-मणिसम्भवः ।
स्वच्छकान्तिर्गुरुः स्निग्धो वर्णाढ्यो दीप्तिमानपि ॥ ३४ ॥
वलक्षः पिञ्जरो धन्यः 'गोमेद' इति कीर्त्तितः ।
चतुर्द्धा जाति-भेदस्तु गोमेदेऽपि प्रकाश्यते ॥ ३५ ॥
ब्राह्मणः शुक्लवर्णः स्यात् क्षत्रियो रक्त उच्यते ।
आपीतो वैश्यजातिस्तु शूद्रस्त्वानील उच्यते ॥ ३६ ॥
छाया चतुर्विधा श्वेता रक्ता पीताऽसिता तथा ॥ ३७ ॥
गुरुः प्रभाढ्यः सितवर्णरूपः स्निग्धो मृदुर्वीति महापुराणः ।
स्वच्छस्तु गोमेदमणिर्धृतोऽयं करोति लक्ष्मीं धनधान्य-वृद्धिम् ॥३८॥
लघुर्विरूपोऽति खरोऽश्यमानः,
स्नेहोपलिप्तो मलिनः स्व(ख)रोऽपि ।
करोति गोमेद-मणिर्विनाशम् ;
सम्पत्तिभोगाऽखिल (वल) वीर्य्यराशेः ॥ ३९ ॥
ये दोषा हीरके ज्ञेयास्ते गोमेदमणावपि ।
परीक्षा वह्नितःकार्य्या शाणे वा रत्नकोविदैः ।
स्फटिके नैव कुर्व्वन्ति गोमेद प्रतिरूपिणम् ॥ ४० ॥

---

* अन्यत्सर्व्वमस्ति शुक्रनीति, राजनिर्घण्ट, गरुड़पुराण, वृहत्संहितादिष्वपि ततोऽनु-सन्धेयम् ।

शुद्धस्य गोमेद मणेस्तु मूल्यं, सुवर्णतो द्वैगुणमाहुरेके।
अन्ये तथा विद्रुमतुल्य-मूल्यं ; तथापरे चामरतुल्यमाहुः॥ ४१ ॥
चतुर्व्विधानामेषान्तु धारणे परिसम्मतम्॥ ४२ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ गोमेद परीक्षा॥

———*———

## अथ मुक्ता परीक्षा।

द्विपेन्द्र जीमूतवराहशङ्ख, मत्स्याहि-शुक्त्युद्भववेणुजानि।
मुक्ताफलानि प्रथितानि लोके ; तेषान्तु शुक्त्युद्भवमेव भूरि *॥४३॥
वेध्यन्तु शुक्त्युद्भवमेव तेषां, शेषाण्यवेध्यानि वदन्ति तज्ज्ञाः।
मतङ्गजा ये तु विशुद्धवंश्या ; स्तेमौक्तिकानां प्रभवाः प्रदिष्टाः॥४४॥
उत्पद्यते मौक्तिकमेषु वृत्तम्, आपीतवर्णं प्रभया विहीनम्॥ ४५ ॥
वक्ष्ये गजपरीक्षायां गजजातिश्चतुर्व्विधा।
मौक्तिकं तेषु जातं हि चतुर्विधमुदीर्य्यते॥ ४६ ॥
ब्राह्मणं पीतशुक्लन्तु क्षत्रियं पीतरक्तकम्।
पीतश्यामन्तु वैश्यः स्यात् शूद्रं स्यात् पीतनीलकम्॥ ४७ ॥
काम्बोज-कुम्भसम्भूतं धात्रीफलनिभं गुरु।
अतिपिञ्जरसच्छायं मौक्तिकं मन्ददीधिति॥ ४८ ॥
धाराधरेषु जायेत मौक्तिकं जल-विन्दुभिः।
दुर्लभन्तन्मनुष्याणां देवैस्तत् क्रियतेऽम्बरात्॥ ४९ ॥
कुक्कुटाण्डसमं वृत्तं मौक्तिकं निविडं गुरु।
घनजं भानुसंकाशं देवयोग्यममानुषम्॥ ५० ॥

---

* "स्तात्यम्बु शुक्ति कुहरे पतदेवमुक्ता,
मुक्तैव पङ्कजदले मरजाःसु किञ्चित्"॥ इति कवयः।

तथाहि, गारुड़े,—

नाप्नोति मेघ-प्रभवं धरित्रीं वियद्गतं तद्विबुधा हरन्ति ।
अर्च्चिंप्रभानाहत-दिग्विभाग मादित्यवद्‌:खविभाव्य विम्बम् ॥५१॥
तेजस्विरस्तस्य हुतासनेन्दु, नक्षत्रताराग्रह-सम्भवस्य ।
दिवा यथा दीप्तिकरं तथैव ; तमोऽवगाढ़ास्वपि तन्निशासु ॥ ५२ ॥
विचित्ररत्नद्युति-चारुतोय-चतुः समुद्रा भवनाभिरामाः ।
मूल्यं नवास्यादितिनिश्चयो मे ; कृत्स्ना मही तस्य सुवर्ण-पूर्णा ॥५३॥
हीनोऽपि यस्तल्लभते कथञ्चिद्विपाक योगान्महतः शुभस्य ।
सपत्नहीनः पृथिवीं समग्रां भुनक्ति तत्तिष्ठति यावदेव ॥ ५४ ॥
न केवलन्तच्छुभकृन्नृपस्य भाग्यैः प्रजानामपि जन्म तस्य ।
तद्‌योजनानां परितः शतस्य सर्वाननर्थान् विमुखो करोति ॥५५॥

जलज्योतिर्मरुज्जानां मेघानान्त्रिविधम्भवेत् ।
जलाधिकेऽधिकं स्वच्छं कोमलं गुरुकान्तिमत् ॥ ५६ ॥
ज्योतिषं कान्तिमद्वृत्तं दुर्निरीक्ष्यं रविप्रभम् ।
कान्तिमत् कोमलं वृत्तं मारुतं विमलं लघु ॥ ५७ ॥

गारुड़े,—

वराहदंष्ट्रा प्रभवं वरिष्ठम्, *
तस्यैव दंष्ट्राङ्कुर-तुल्य वर्णम् ।
क्वचित् कथञ्चित् स भुवः प्रदेशे ;
प्रजायते शूकरवद्विशिष्टः ॥ ५८ ॥

ब्रह्मादि जातिभेदेन वराहोऽपि चतुर्विधः ।
तेषु जाता भवेन्मुक्ता समासेन चतुर्विधा ॥ ५९ ॥
ब्राह्मणः शुक्लवर्णस्तु शुद्रमन्ते च लक्ष्यते ।
क्षत्रियो रक्तवर्णस्तु स्पर्शे कर्कश एव च ॥ ६०॥

* 'दंष्ट्रामूले शशिकान्ति-सप्रभं बहुगुणञ्च वाराहम्' । इति वृहत्संहितायाम् ।

वैश्यः स्यात् शुक्ल-पीतस्तु कोमलः कोल-सन्निभः।
शूद्रः स्यात् शुक्लनीलस्तु कर्कशः श्याम एव च ॥ ६१ ॥

तथा च,—

कोलजं कोलसदृशं तद्दंष्ट्रा सदृशच्छविः।
अलभ्यं मनुजैरम्यं मौक्तिकं पुण्यवर्ज्जितैः ॥ ६२ ॥

ये कम्बवः शार्ङ्ग मुखावमर्षं पीतस्य शङ्ख प्रवरस्य गोत्रे।
स्यान्मौक्तिकानामिह तेषु जन्म तल्लक्षणं सम्प्रतिकीर्त्तयामः ॥ ६३ ॥
स्वयोनि मध्यच्छवि-तुल्यवर्णं शङ्खाद्बृहत्कोलफलप्रमाणम् ॥ ६४ ॥

तथाच,—

वर्षोपल समं दीप्त्या पाञ्चजन्य-कुलोद्भवम् ॥
कपोताण्ड-प्रमाणं तत् अतिकान्ति-मनोहरम् ॥ ६५ ॥
अश्विन्यादिक नक्षत्रे ये जाताः कम्बवः शुभाः।
मौक्तिकं तेषु जातं हि सप्तविंशति-भेदभाक् ॥ ६६ ॥
शुक्लाशुक्लाः पीतरक्ता नीलालोहित-पिञ्जराः।
आकर्व्बुराः पाटलाश्च नववर्णाः प्रकीर्त्तिताः ॥ ६७ ॥
महन्मध्य लघून्मानैः सप्तविंशतिधा भवेत्।
क्रमतस्तेषु विज्ञेयं नक्षत्रेषु मनीषिभिः ॥ ६८ ॥
पाठीन पृष्ठस्य समानवर्णं मीनात् सुवृत्तं लघु नातिसूक्ष्मम्।
उत्पद्यते वारिचराननेषु मीनाश्चते मध्यचराः पयोधेः ॥ ६९ ॥

तल्लक्षणं यथा,—

गुञ्जाफलकाय-स्थौल्यं मौक्तिकं तिमिजं लघु *।
पाटलापुष्प-संकाशं अल्पकान्ति सुवर्त्तुलम् ॥ ७० ॥
वातपित्त-कफद्वन्द्व-सन्निपात-प्रभेदतः।
सप्त प्रकृतयो मीना सप्तधा तेन मौक्तिकम् ॥ ७१ ॥

---

* "तिमिजं मत्स्याक्षिनिभं हृद्यतमपवित्रं बहुगुणञ्च"। इति वराहमिहिरीये।

लघिष्ठमरुणं वाता दापीतं मृदुपित्ततः ।
शुक्लं गुरुकफोद्रेकाद्वातपित्तान्मृदुर्लघुः ॥ ७२ ॥
वातश्लेष्मभवं स्थूलं पित्तश्लेष्मजमच्छकम् ।
सर्व्वलिङ्गप्रयोगेन सान्निपातिकमुच्यते ॥ ७३ ॥
एकजाः शुभदाः प्रोक्ता स्तथा वै सान्निपातिकाः ॥ ७४ ॥

फणि-मुक्तारूपम्,—

भौजङ्गमं नील विशुद्धवर्णं सर्व्वम्भवेत् प्रोज्ज्वलवर्णशोभम् ।
नितान्तधौत-प्रतिकल्पमानं निस्त्रिंशधारा समवर्ण-शोभम् ॥७५॥
भुजङ्गमास्ते विषवेग दृप्ताः,
श्रीवासुकेर्वंश-भवाः पृथिव्याम् ।
क्वचित्कदाचित् खलु पुण्यदेशे ;
तिष्ठन्ति ते पश्यति तान् मनुष्यः ॥ ७६ ॥

तल्लक्षणमुच्यते,—

फणिजं वर्त्तुलं रम्यं नीलच्छायं महाद्युतिम् ।
पुण्यहीना न पश्यन्ति वासुकेः कुल-सम्भवम् ॥ ७७ ॥
शृगाल-कोलामल-कोलगुञ्जा-फलप्रमाणास्तु चतुर्विधास्ते ।
स्युर्ब्रह्म-वाहुद्भव-वैश्यशूद्र-सर्पेषु जाताः प्रवरास्तु सर्वे ॥ ७८ ॥

फलं यथा,—

प्राप्यापि रत्नानि धनं श्रियम्वा,
राजश्रियम्वा महतीं दूरापाम् ।
तेजोन्विताः पुण्यकृतो भवन्ति ;
मुक्ताफलस्यास्य विधारणेन ॥ ७९ ॥
जिज्ञासयारत्न-विनिश्चयज्ञैः,
शुभे मुहूर्त्ते प्रयतैः प्रयत्नात् ।

रक्षाविधानं सुमहद्विधाय ;

हर्म्म्योपविष्टं क्रियते यदा तत् ॥ ८० ॥

तदा महद्दुन्दुभि-तूर्य्यघोषैः

घनैर्घनैराद्रियतेऽन्तरीक्षम् ॥ ८१ ॥

न तं भुजङ्गा न तु जातुधाना, न राक्षसा नापि च दुष्ट लोकाः ।

हिंसन्ति यस्याहि शिरः समुत्थं ; मुक्ताफलं तिष्ठति कोषमध्ये ॥८२॥

भेकादिष्वपि जायन्ते मणयो ये क्वचित् क्वचित् ।

भौजङ्गम मणेस्तुल्यास्ते विज्ञेया बुधोत्तमैः ॥ ८३ ॥

नक्षत्रमालेव दिवो विशीर्णा,

दन्तावली तस्य महासुरस्य ।

विचित्र रूपेषु विचित्र-वर्णा ;

पयः सुपत्युः पयसां पपात ॥ ८४ ॥

सम्पूर्ण-चन्द्रांशु कलापकान्ते,

मंणि प्रवेकस्य महागुणस्य ।

तच्छुक्तिमत्सु स्थितिमापबीज,—

मासन् पुराप्यन्य भवानि यानि ॥ ८५ ॥

यस्मिन् प्रदेशेऽम्बुनिधौ पपात,

सुचारुमुक्तामणिरत्नबीजम् ।

तस्मिन् पयस्तोयधराबकीर्णं ;

शुक्तौ स्थितं मौक्तिकतामवाप ॥ ८६ ॥

सैंहलिक पारलौकिक-सौराष्ट्रिक-ताम्रपर्णि पारसवाः ।

कौवेर-पाण्ड्य-वाटक-हैमा इत्याकरा ह्यष्टौ ॥ ८७ ॥

स्वात्यां स्थिते रवौ मेघैर्ये मुक्ता जलविन्दवः ।

शीर्णाः शुक्तिषु जायन्ते तैर्मुक्ता निर्म्मल-त्विषः ॥ ८८ ॥

स्थूला मध्यास्तथा सूक्ष्मा विन्दुमानानुसारतः ।

सुस्निग्धं मधुरच्छायं मौक्तिकं सिंहलोद्भवम् ॥ ८९ ॥
पारलौकिकसम्भूतं मौक्तिकं निविड़ं गुरु ।
प्रायः सशर्करं ज्ञेयं विषमं सार्व्ववर्णिकम् (१) ॥ ९० ॥
सौराष्ट्रिकभवं स्थूलं वृत्तं स्वच्छं सितं घनम् ।
ताम्रपर्णभवं ताम्रं पीतं पारसवोद्भवम् ॥ ९१ ॥
ईषत्श्यामञ्च रूक्षञ्च कौवेरोद्भव मौक्तिकम् ।
पाण्ड्यदेशोद्भवं पाण्डु सितं रूक्षं विराटजम् ॥ ९२ ॥
रुक्मिण्याख्यातु या शुक्तिस्तत्प्रसूतिः सुदुर्लभा ।
तत्र जातं सितं स्वच्छं जातीफलसमं भवेत् ॥ ९३ ॥
छायावद्बहुलं रम्यं निर्दोषं यदिलभ्यते ।
अमूल्यं तद्विनिर्दिष्टं रत्न-लक्षण कोविदैः ॥
दुर्लभं नृपयोग्यं स्यादल्पभाग्यैर्न लभ्यते ॥ ९४ ॥

अन्यस्त्वाह,—

सर्व्वस्य तस्याकरजाविशेषात्,
रूपप्रमाणे च यथैव विद्वान् ।
न हि व्यवस्थास्ति गुणागुणेषु ;
सर्व्वत्र सर्व्वाकृतयो भवन्ति ॥ ९५ ॥

ब्रह्मादि जाति-भेदेन शुक्तयोपि चतुर्विधाः ।
तासु सर्वासु जातं हि मौक्तिकं स्याच्चतुर्विधम् ॥ ९६ ॥
ब्राह्मणस्तु सितः स्वच्छो गुरुः शुक्लः प्रभान्वितः ।
आरक्तः क्षत्रियः स्थूलस्तथारुण-विभान्वितः ॥ ९७ ॥
वैश्यस्त्वापीतवर्णोऽपि स्निग्धः श्वेतः प्रभान्वितः ॥
शूद्रः शुक्लवपुः सूक्ष्म तथा स्थूलोऽसितद्युतिः ॥ ९८ ॥

---

(१) इति श्लोकार्द्धं (ग) पुस्तकेऽधिकमिवाभाति ।

वर्णोपलानां समवर्णशोभम्,
त्वक्सार पर्व्वप्रभवं प्रदिष्टम् ।
ते वेणवी दिव्यजनोपभोग्ये ;
स्थाने प्ररोहन्ति न सार्व्वजन्ये ॥ ९९ ॥

[ अथ वेणुजमुक्ता लक्षणारम्भः ] ।

वंशजं शशिसंकाशं कक्कोलफलमार्द्रकम् ।
प्राप्यते बहुभिः पुण्यैस्तद्‌द्रव्यं वेदमन्त्रतः ॥ १०० ॥
पञ्चभूतसमुद्रेकाद्वंशे पञ्चविधे भवेत् ।
मुक्ताः पञ्चविधास्तासां यथा लक्षणमुच्यते ॥ १ ॥
पार्थिवी गुरुवक्त्रा च तैजसी तेजसा लघुः ।
वायवी च मृदुः स्थूला गागनी कोमला लघुः ॥ २ ॥
आप्याः स्निग्धाः भृशं शुक्लाः पञ्चैताः प्रवरा मताः ।
आसां धारणमात्रेण व्याधिः कोऽपि न जायते ॥ ३ ॥
एवमन्यत्रापि,—
गजाहि कोलमत्स्यानां शीर्षे मुक्ताफलोद्भवः ।
त्वक्सार शुक्ति-शङ्खानां गर्भे मुक्ताफलोद्भवः ॥ ४ ॥
धाराधरेषु जायेत मौक्तिकं जलविन्दुभिः ।
जीमूते शुचिरूपञ्च गजे पाटलभास्वरम् ॥ ५ ॥
मत्स्ये श्वेतञ्च निस्तेजः फणीन्द्रे नीलभास्वरम् ।
हरिच्छ्रुतं तथा वंशे पीतश्वेतञ्च शूकरे ॥ ६ ॥
शङ्खशुक्त्युद्भवं श्वेतं मुक्तारत्नमनुत्तमम् ।
चतुर्द्धा मौक्तिके छाया पीता च मधुरा सिता ॥ ७ ॥
नीला चैव समाख्याता 'रत्न-तत्त्व परीक्षकैः' ।
पीता लक्ष्मीप्रदा च्छाया मधुरा बुद्धिवर्द्धिनी ॥ ८ ॥
शुक्ला यशस्करी च्छाया नीला सौभाग्य-दायिनी ।

सित च्छाया भवेद्विप्रः क्षत्रियस्त्वार्करश्मिमान् ।
पीतच्छाया भवेद्वैश्यः शूद्रः कृष्णरुचिर्मतः ॥ ९ ॥

—— ●● ——

## अथ गुणाः । [ मात्स्ये ] ।

सुतारञ्च सुवृत्तञ्च स्वच्छञ्च निर्म्मलस्तथा ।
घनं स्निग्धञ्च सच्छायं तथाऽस्फुटितमेव च ।
अष्टौ गुणाः समाख्याता मौक्तिकानामशेषतः ॥ १० ॥
तद्‌यथा,—
तारकाद्युतिसंकाशं सुतारमिति गद्यते ।
सर्व्वतो वर्त्तुलं यच्च सुवृत्तं तन्निगद्यते ॥ ॥ ११ ॥
स्वच्छं दोषविनिर्म्मुक्तं निर्म्मलं मलवर्ज्जितम् ।
गुरुत्वं तुलने यस्य तद्‌घनं मौक्तिकं वरम् ॥ १२ ॥
स्नेहेनैव विलिप्तं यत् तत् स्निग्धमिति गद्यते ।
छाया समन्वितं यच्च सु(स)च्छायं तन्निगद्यते ।
व्रणरेखाविहीनं यत् तत्स्यादस्फुटितं शुभम् ॥ १३ ॥
भ्राजिष्णु कोमलं कान्तं मनोज्ञं स्फुरतीव च ।
स्रवतीव च सत्त्वानि तन्महारत्न संज्ञितम् ॥ १४ ॥
श्वेतकाच समाकारं शुभ्रांशु प्रतयोजितम् ।
ऋषराज(१) प्रतिच्छायं मौक्तिकं देवभूषणम् ॥ १५ ॥
गारुड़े,—*
त्वक्सार नागेन्द्र-तिमि-प्रसूतम्,
यच्छङ्खजं यच्च वराह जातम् ।

(१) ऋषिराज इति (ग) पुस्तक पाठः ।

* अन्यत् सर्व्वं शुक्रनीति-बृहत्संहिता-मत्स्यपुराण-मानसोल्लासादिषु अनुसन्धेयम् ।

प्रायो विमुक्तानि भवन्ति भासा(:) ;
शस्तानि माङ्गल्य तया तथापि ॥ १६ ॥

प्रमाणवद्गौरवरश्मियुक्तं सितं सुवृत्तं समसूक्ष्मरन्ध्रम् ।
अक्रेतुरप्या वहति प्रमोदं यन्मौक्तिकं तद्गुणवत्प्रदिष्टम् ॥ १७ ॥

एवं समस्तेन गुणोदयेन यन्मौक्तिकं योगमुपागतं स्यात् ।
न तस्य भर्त्तारमनर्थजात एकोऽपि दोषः समुपैति सद्य :॥ १८ ॥

एवं सर्व्वगुणोपेतं मौक्तिकं येन धार्य्यते ।
तस्यायुर्व्वर्द्धते लक्ष्मीः सर्व्वपापं प्रणश्यति ॥ १९ ॥

गुणवद्गुरु यद्गेहे मौक्तिकैकं हि तिष्ठति ।
चञ्चलापि स्थिरा भूत्वा कमला तत्र तिष्ठति ॥ २० ॥

अथ दोषाः ।

यथा,—

चत्वारःस्युर्महादोषाः षण्मध्याश्च प्रकीर्त्तिताः ।
एवं दश समाख्यातास्तेषां वक्ष्यामि लक्षणम् ॥ २१ ॥

यत्रैकदेशे संलग्नः शुक्तिखण्डो विभाव्यते ।
शुक्तिलग्नः समाख्यातः स दोषः कुष्ठकारकः ॥ २२ ॥

मीन-लोचन-संकाशो दृश्यते मौक्तिके तु यः ।
मत्स्याक्षः स तु दोषः स्यात् पुत्त्रनाशकरो ध्रुवम् ॥ २३ ॥

दीप्तिहीनं गतच्छायं जरठं तद्विदुर्बुधाः ।
तस्मिन् संधारिते मृत्युर्जायते नात्रसंशयः ॥ २४ ॥

मौक्तिकं विद्रुमच्छायमतिरक्तं विदुर्बुधाः ।
दारिद्र्यजनकं यस्मात्तस्मात्तत्परिवर्ज्जयेत् ॥ २५ ॥

उपर्य्युपरि तिष्ठन्ति वलयो यत्र मौक्तिके ।
त्रिवृत्तं नाम तस्योक्तं सौभाग्य-क्षयकारकम् ॥ २६ ॥

अवृत्तं मौक्तिकं यच्च चिपिटं तन्निगद्यते ।
मौक्तिकं ध्रियते येन तस्या कीर्त्तिर्भवेत् सदा ॥ २७ ॥
त्रिकोणं त्र्यस्रमाख्यातं सौभाग्य-क्षयकारकम् ।
दीर्घं यत्तत् कृशं प्रोक्तं प्रज्ञाविध्वंस-कारकम् ॥ २८ ॥
निर्भग्नमेकतोयच्च कृश-पार्श्वं तदुच्यते ।
सदोषं मौक्तिकं निन्द्यं निरुद्योगकरं हि तत् ॥ २९ ॥
अवृत्तं पिड़कोपेतं सर्व्वसम्पत्ति-हारकम् ।
यस्मिन् कृत्रिमसन्देहः क्वचिद्भवति मौक्तिके ॥ ३० ॥
उष्णे सलवणे स्नेहे निशां तद्वासयेज्जले ।
व्रीहिभिर्मर्दनीयं वा शुष्कवस्त्रोपवेष्टितम् ॥
यत्तु नायाति वैवर्ण्यं विज्ञेयं तदकृत्रिमम् ॥ ३१ ॥
तथाहि,—
क्षिपेद्गोमूत्रभाण्डे तु लवण-क्षारसंयुते ।
स्वेदयेद्वह्निना वापि शुष्कवस्त्रेण वेष्टयेत् ॥ ३२ ॥
हस्ते मौक्तिकमादाय व्रीहिभिश्चोपघर्षयेत् ।
कृत्रिमं भङ्गमाप्नोति सहजश्चाति दीप्यते ॥ ३३ ॥

कृत्वा पचेत् सुपिहिते शुभदारु * भाण्डे,
मुक्ताफलं निहित नूतनशुक्ति-काण्डम् ।
स्फोटस्तथा प्रणिदधीत ततश्च भाण्डात् ;
संस्थाप्य धान्यनिचये च तमेकमासम् ॥ ३४ ॥
आदाय तत्सकलमेव ततोऽन्न(१)भाण्डम्,
जम्बीरजातरस-योजनया विपक्वम् ।

(१) ततोऽन्यभाण्डम् इति (ग) पुस्तक पाठः ।

* दारु इत्यौषधिविशेषः । अथवा 'दारु' इति पाठे दीर्य्यते इति व्युत्पत्त्या काष्ठ-मयं पात्रम् इति ।

घृष्टं ततो मृदु तनूकृतपिण्डमूलैः ;
कुर्य्याद् यथेच्छमिह मौक्तिकमाशुविद्धम् ॥ ३५ ॥
मृल्लिप्तमस्य पुटमध्यगतन्तुकृत्वा,
पश्चात् पचेत्तनु ततश्च वितानपत्या।
दुग्धे ततः पयसि तद्विपचेत् सुधायाम् ;
पक्वं ततोऽपि पयसा शुचिचिक्कणेन ॥ ३६ ॥
शुद्धं ततो विमलवस्त्र-विघर्षणेन
स्यान्मौक्तिकं विमलसद्गुणकान्तियुक्तम् ॥ ३७ ॥

---

## अथ मूल्यम्।

पञ्चभिर्माषको ज्ञेयो गुञ्जाभिर्माषकैस्तथा।
चतुर्भिः शाणमाख्यातं माषकैर्मणिवेदिभिः ॥ ३८ ॥
एकस्य शुक्ति प्रभवस्य शुद्ध मुक्तामणेः शाणकसम्मितस्य।
मूल्यं सहस्राणि कपर्दकानि त्रिभिः शतैरभ्यधिकानि पञ्च ॥ ३९ ॥
यन्माषकार्द्धेन ततो विहीनं चतुःसहस्रं लभतेऽस्य मूल्यम्।
यन्माषकांस्त्रीन् विभृयाद्गुरुत्वे द्वे तस्य मूल्यं परमस्मदिष्टम् ॥ ४० ॥
अर्द्धाधिक द्वौ वहतोऽस्य मूल्यं,
त्रिभिः शतैरभ्यधिकं सहस्रम्।
द्विमाषकोन्मापित गौरवस्य ;
शतानि चाष्टौ कथितानि मूल्यम् ॥ ४१ ॥
अर्द्धाधिकमाषक सम्मितस्य,
सपञ्चविंशं त्रितयं शतानाम्।
षड्माषकोन्मापित मानमेकं ;
तस्याधिकं विंशतिभिः शतं स्यात् ॥ ४२ ॥

गुञ्जाश्च षड् धारयतः शते द्वे,
मूल्यं परं तस्य वदन्ति तज्ज्ञाः।
गुञ्जाश्चतस्रो विधृतं शतार्धा-
दर्द्धं लभेताप्यधिकं त्रिभिर्वा ॥ ४३ ॥

अतःपरं स्याद्धरण-प्रमाणं,
संख्याविनिर्देश विनिश्चयोक्तिः।
त्रयोदशानां धरणे धृतानां;
स्विक्केति नाम प्रवदन्ति तज्ज्ञाः ॥ ४४ ॥

अध्यर्द्धमाचष्ट शतं क्रतं स्यात्,
मूल्यं गुणैस्तस्य समन्वितस्य।
यदि षोड़शभिर्भवेत् सम्पूर्णं;
धरणं तत् प्रवदन्ति दार्व्विकाख्यम् ॥ ४५ ॥

अधिकं दशभिः शतञ्च मूल्यं,
समवाप्नोत्यपि वालिशस्य हस्तात्।
यदि विंशतिभिर्भवेत् सुपूर्णं;
धरणं मौक्तिकजं वदन्ति तज्ज्ञाः ॥ ४६ ॥

नवसप्ततिमाप्नुयात् स्वमूल्यं,
यदि न स्यात् गुणयुक्तितो विहीनम् ॥ ४७ ॥

त्रिंशता धरणं पूर्णं शिक्येति परिकीर्त्यते।
चत्वारिंशत्परं तस्य मूल्यमेष विनिश्चयः ॥ ४८ ॥

चत्वारिंशद्भवेत् शिक्या त्रिंशन्मूल्यं लभेत सा।
पञ्चाशत्तु भवेत् सोमस्तस्य मूल्यन्तु विंशतिः ॥ ४९ ॥

षष्ठिर्निकरशीर्षं स्यात् तस्य मूल्यं चतुर्द्दश।
अशीतिर्नवतिश्चेति-कुप्येति परिकल्पते ॥ ५० ॥

एकादश स्युर्नवच तयोर्मूल्यमनुक्रमात्।

शतमष्टाधिकं द्वे च चूर्णोऽयं परिकीर्त्तितः ॥
सप्त-पञ्च-त्रयश्चैव तेषां मूल्यमनुक्रमात् ॥ ५१ ॥
शाणात्परं माषकमेकमेकं यावद्विवर्द्धेत गुणैरपीदम् ।
मूल्येन तावत् द्विगुणेन योग्यमाप्नोत्यऽनावृष्टिहतेऽपि देशे ॥५२॥

सूक्ष्मातिसूक्ष्मोत्तममध्यमानां,
यन्मौक्तिकानामिह मूल्यमुक्तम् ।
तज्जातिमात्रेण न जातु कार्य्यं ;
गुणैरहीनस्य हि तत्प्रदिष्टम् ॥ ५३ ॥

यत्तु चन्द्रांशु-संकाशमीषद्विम्बफलाकृति ।
स्वमूल्यात् सप्तमं भागमवृत्तत्वाल्लभेत तत् ॥ ५४ ॥
पीतकस्य भवेदर्द्धमवृत्तस्य त्रिभागतः ।
विषमव्यस्तजातीनां षड्भागं मूल्यमादिशेत् ॥ ५५ ॥
अर्द्धरूपाणि सस्फोटात् पङ्कचूर्णानि यानि च ।
असाराणि च यानि स्युः करकाकारवन्ति च ॥ ५६ ॥
एकदेशप्रभावन्ति सकलाश्लेषितानि च ।
यानि चातकवर्णानि कांस्यवर्णानि यानि च ॥ ५७ ॥
मीननेत्र-सवर्णानि ग्रन्थिभिः संवृतानि च ।
सदोषानि च यानि स्युस्तेषां मूल्यं पदांशिकम् ॥ ५८ ॥

अन्यत्र तु,—

सप्तालो प्रोच्यते गुञ्जा सा तिस्रो रूपकम्भवेत् ।
रूपकैर्दशभिः प्रोक्तः कलञ्जो नामनामतः ॥ ५९ ॥
कलञ्जनामकं द्रव्यं एकदेशे निधापयेत् ।
अन्यतो जलविन्दुस्तु तोलनार्थं विनिक्षिपेत् ॥ ६० ॥
चत्वारि त्रीणि युग्मं वा तथैकं वहु वा स्थितम् ।
समं कलञ्जमानेन तुलामानादतः क्रमात् ॥ ६१ ॥

नवमात्पञ्चमं यावत् कलञ्जेन समं यदा * ।
तत्क्रमादुत्तमं ज्ञेयं मौक्तिकं रत्न-वेदिभिः ॥ ६२ ॥
चतुर्दशात्समारभ्य दशसंख्या-विधिं क्रमात् ।
कलञ्जस्य समानं वा (३) मौक्तिकं मध्यमं विदुः ॥ ६३ ॥
आरभ्य विंशतितमात् क्रमात्पञ्चदशावधि ।
लङ्घ्यास्ताः कथिता मुक्ता मूल्यञ्च तदनुक्रमात् ॥ ६४ ॥
कलञ्जद्वयमानेन यद्येकं मौक्तिकम्भवेत् ।
न धार्य्यं नरनाथैस्तु देव-योग्यममानुषम् ॥ ६५ ॥
इत्थं विचार्य्य यो मुक्तां परिधत्ते नराधिपः ।
तस्यायुश्च यशो वीर्य्यं विपरीतमतोऽन्यथा ॥ ६६ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ मुक्तापरीक्षा ॥

——— ०० ———

## अथ वैदूर्य्य परीक्षा ।

कल्पान्तकाल क्षुभिताम्बुराशि,
निर्ह्रादकल्पा दितिजस्य नादम् ।
वैदूर्य्यमुत्पन्नमनेकवर्णं ;
शोभाभिरामं द्युतिवर्ण-बीजम् ॥ ६७ ॥

अविदूरे विदूरस्य (४) गिरेरुत्तुङ्ग-रोधसः ।
कामभूतिक-सीमान-मनु तस्याकरोऽभवत् † ६८ ॥

---

(३) समानत्वात् इति (ख) पुस्तकपाठः ।
(४) अविदूरे वैदूर्य्यस्य इति (ग) पुस्तक पाठः ।

---

* नवमात् पञ्चमं यावत्—इत्यारभ्य मध्यमम्विदुरित्यन्तं श्लोकद्वयं (क) पुस्तकेऽधिकं दृश्यते ।

† कामभूतिकसीमान्तं इति पाठमनादृत्य 'काकतालीयसीमान्ते मनीनामाकरोऽभवत्' इत्येवं बहुवचनमित्यत्रामल्लिनाथेन कुमारसम्भव टीकायामुक्तवादि ।

तस्य नाद-समुत्पत्वादाकरः सुमहागुणः ।
अभूदुत्त(ा)रितो लोके लोकत्रय-विभूषणः ॥ ६९ ॥

तस्यैव दानव-पते र्निनदानुरूप-,
प्रावृट् पयोद-वरदर्शित-चारुरूपाः ।
वैदूर्य्यरत्नमणयो विविधावभासाः ;
तस्मात् स्फुलिङ्ग-निवहा इव सम्बभूवुः ॥ ७० ॥

पद्मरागमुपादाय मणि-वर्णा हि ये क्षितौ ।
सर्वांस्तान् वर्ण-शोभाभि र्वैदूर्य्यमनुगच्छति ॥ ७१ ॥

तेषां प्रधानं शिखिकण्ठ-नीलम्,
यद्वा भवेद्वेणु-दल-प्रकाशम् ।
चाषाग्रपक्ष-प्रतिमश्रियो ये ;
न ते प्रशस्ता मणि-शास्त्रविद्भिः ॥ ७२ ॥

तथा च,—
सितश्च धूम्र-सङ्काशमीषत्कृष्णनिभम्भवेत् ।
वैदूर्य्यं नाम तद्रत्नं रत्नविद्भिरुदाहृतम् ॥ ७३ ॥
ब्रह्म-क्षत्रिय-विट्-शूद्रजाति-भेदाच्चतुर्विधम् ।
सितनीलो भवेद्विप्रः सितरक्तस्तु बाहुजः ।
पीतानिलस्तु वैश्यः स्यान्नील एव हि शूद्रकः ॥ ७४ ॥

अथ गुणाः ।

मार्जार-नयन-प्रख्यं रसोन-प्रतिमं हि वा ।
कलिलं निर्म्मलं व्यङ्गं वैदूर्य्यं देवभूषणम् ॥ ७५ ॥
सुतारं घन-मत्यच्छं कलिलं व्यङ्गमेव च ।
वैदूर्य्याणां समाख्याता एते पञ्च महागुणाः ॥ ७६ ॥
तद्यथा,—
उद्गिरन्निव दीप्तिं योऽसौ सुतार इति गद्यते ॥ ७७ ॥

प्रमाणताल्पं गुरुयद् घनमित्यभिधीयते ॥ ७८ ॥
कलङ्कादि-विहीनन्तदत्यच्छमिति कीर्त्तितम् ।
ब्रह्म-शूद्रं कलाकारश्चश्चलो यत्र दृश्यते ॥ ७९ ॥
कलिलं नामतद्राज्ञः सर्वं-सम्पत्ति-कारकम् ।
विश्लिष्टाङ्गन्तु वैदूर्य्यं व्यङ्गमित्यभिधीयते ॥ ८० ॥
गुणवान् वैदूर्य्य-मणिर्योजयति स्वामिनं वरभा(भो)ग्यैः ।
दोषैर्युक्तो दोषैस्तस्माद् यत्नात् परीक्षेत ॥ ८१ ॥
कर्करं कर्कशस्त्रासः कलङ्को देह इत्यपि ।
एते पञ्च महादोषा वैदूर्याणामुदीरिताः ॥ ८२ ॥
शर्करायुक्तमिव यत् प्रतिभाति च कर्करम् ।
स्पर्शेऽपि च यत्तज्ज्ञेयं कर्कशं बन्धुनाशनम् ॥ ८३ ॥
भिन्न भ्रान्ति-करस्त्रासः स कुर्य्यात् कुल-संक्षयम् ।
विरुद्ध-वर्णो यस्याङ्के कलङ्कः क्षय-कारकः ॥ ८४ ॥
मलदिग्ध इवाभाति देहो देह-विनाशनः ॥ ८५ ॥

जयति यदि सुवर्णं त्यागहीनं यदा वा,
बहुविध-मणिधारी भूपतिर्वा यतिर्वा ।
दधदपि धृतदोषं जातु वैदूर्य्यरत्नम् ;
प्रतिघात-फलरूप-पातमेष्य(ध्य)त्यवश्यम् ॥ ८६ ॥

गिरिकाच-शिशुपालौ काच-स्फटिकाश्च भूमिनिर्भिन्नाः ।
वैदूर्य-मणेरेते विजातयः सन्निभाः सन्ति ॥ ८७ ॥
लिख्याभावात् काचं लघुभावाच्छैशुपालकञ्चिद्यात् ।
गिरिकाचमदीप्तित्वात् स्फटिकं वर्णोज्ज्वलत्वेन ॥ ८८ ॥
जात्यस्य वर्णस्य मणेर्नजातु विजातयः सन्ति समानवर्णाः ।
तथापि नानाकरणार्थमेवं भेदप्रकारः परमः प्रदिष्टः ॥ ८९ ॥
सुखोपलक्ष्यश्च सदा विचार्य्यो ह्ययं प्रभेदो विदुषा नरेण ।

खेह-प्रभेदो लघुता मृदुत्वं विजाति-लिङ्गं खलु सर्वजन्यम् ॥९०॥
यदिन्द्रनीलस्य महागुणस्य सुवर्ण-संख्याकलितस्य मूल्यम् ।
तदेव वैदूर्य्यमणेः प्रदिष्टं पलद्वयोन्मापित-गौरवस्य ॥ ९१ ॥

कुशलाकुशलैः प्रयुज्यमानाः,
प्रतिवद्धाः प्रतिसत्क्रिया प्रयोगैः ।
गुणदोष-समुद्भवं लभन्ते ;
मणयोऽर्थान्तरमूल्यमेव भिन्नाः ॥ ९२ ॥
क्रमशः समतीत-वर्त्तमानाः,
प्रतिवद्धा मणिवन्धकेन यत्नात् * ।
यदि नाम भवन्ति दोष-हीना ;
मणयः षड्गुणमाप्नुवन्ति मूल्यम् ॥ ९३ ॥

आकरान् समतीतानां उदधेस्तीर-सन्निधौ ।
मूल्यमेतन्मणीनान्तु न सर्व्वत्र महीतले ॥ ९४ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ वैदूर्य्यपरीक्षा ॥

---*---

## अथ इन्द्रनीलपरीक्षा ।

तथा च गारुड़े,— [ आकरः ]।

तत्रैव सिंहलवधू-करपल्लवाग्र-
व्यालूनवाललवनी-कुसुम-प्रवाले ।
देशे पपात दितिजस्य नितान्तकान्तम् ;
प्रोत्फुल्लनीरज-समद्युति नेत्रयुग्मम् ॥ ९५ ॥

---

* अन्यत्सर्वं गारुड़े विसप्ततितमाध्यायेऽनुसन्धेयम् ।

तत्प्रत्ययादुभय-शोभन-वीचिभासा,
विस्तारिणी जलनिधेरुपकच्छभूमिः ।
प्रोज्झित्य केतकवन-प्रतिबद्ध-लेखा ;
सान्द्रेन्द्रनीलमणि-रत्न-वती विभाति ॥ ९६ ॥

तत्रासिताब्ज-हलभृद्वसनासिभृङ्ग-
शार्ङ्गायुधाभ-हरकण्ठ-कलाय-पुष्पैः ।
शुक्लेतरैश्च कुसुमैर्गिरिकर्णिकाया-
स्तस्मिन् भवन्ति मणयः सदृशावभासः ॥ ९७ ॥

अन्ये प्रसन्नपयसः पयसां निधातु-
रम्बुत्विषः शिखिगण-प्रतिमास्तथाऽन्ये ।
नीलीरसप्रभा (१) बुद्बुदभाश्च केचित् ;
केचित्तथा समद(२)कोकिलकण्ठ-भासः ॥ ९८ ॥

एक प्रकारा(३)विस्पष्ट-वर्णशोभावभासिनः ।
जायन्ते मणयस्तस्मिन् इन्द्रनीला महागुणाः ॥ ९९ ॥
श्वेतनीलं रक्तनीलं पीतनीलमथापि वा ।
कृष्णनीलं तथा ज्ञेयं ब्राह्मणादि क्रमेण तु ॥
छाया चतुर्विधा तस्य शृणु वक्ष्यामि लक्षणम् ॥ १०० ॥
सितच्छायो भवेद् विप्रस्ताम्रच्छायस्तु क्षत्रियः ।
पीतच्छायस्तु वैश्यः स्याद्दृषलः कृष्ण-दीधितिः ॥ १ ॥
तथा च पद्मरागाणां जातक-त्रितयम्भवेत् ।
इन्द्रनीलेष्वपि तथा द्रष्टव्य-मविशेषतः ॥ २ ॥

---

(१) -प्रसभ इति (ख) पुस्तक पाठः ।
(२) केचित्तथा समल इति (क) पुस्तक पाठः ।
(३) -नैक प्रकारा इति (ग) पुस्तक पाठः ।

यस्य मध्यगता भाति नीलस्येन्द्रायुध-प्रभा।
तदिन्द्रनीलमित्याहुर्महार्घ्यं भुवि दुर्लभम् ॥ ३ ॥
यस्तु वर्णस्य भूयस्त्वात् क्षीरे शतगुणे स्थितः।
नीलतां तन्नयेत् सर्व्वं महानीलः स उच्यते ॥ ४ ॥
तथा च,—
इन्द्रनीलस्तु नीलात्मा पद्मरागस्तु लोहितः।
आनील-शुक्ल-स्निग्धस्तु मणिर्मानवकोमतः ॥ ५ ॥
आलोहित-मपीतञ्च स्वच्छं काषायकं विदुः।
आपीत-पाण्डु-पाषाणः पुष्परागोऽभिधीयते ॥ ६ ॥
तमेव लोहिताकारमाहुः कौरण्डकं वुधाः ॥ ७ ॥

अथ गुणाः।

गुरुः स्निग्धश्च वर्णाढ्यः पार्श्ववाह्येव रञ्जकः।
इन्द्रनीलः समाख्यातः पञ्चभिः सुमहागुणैः ॥ ८ ॥
प्रमाणेऽल्पोगुरुर्माने कुरुवृद्धि-करो गुरुः।
स्नेहं स्रवदिवाभाति स्निग्धं धनविवर्द्धनम् ॥ ९ ॥
बालार्काभिमुखो नीलो वमेन्नीलां शिखां हि यः।
वर्णाढ्यो नाम नीलोऽयं धनधान्य-विवर्द्धनः ॥ १० ॥
स्फाटिकं रजतं स्वर्णमन्यद्वा वस्तु तैजसम्।
पार्श्वस्थितं नील-मणिः पार्श्ववर्त्ति यशः प्रदम् ॥ ११ ॥
आश्रयं नीलमणिर्यत्तु तमसेव समाहृतम्।
रञ्जको नाम नीलोयं श्रीयशः कुलवर्द्धनः ॥ १२ ॥

अथ दोषाः [ इन्द्रनीलस्य ]।

दोषा नीले प्रवक्ष्यामि नामभिर्लक्षणैश्च षट्।
अभ्रवत् पटलं यस्य तदभ्रकमिति स्मृतम् ॥ १३ ॥

धारणे तस्य सम्प्रीतिरायुश्चैवविनश्यति ।
शर्करामिश्रितमिति तद्विज्ञेयं सशर्करम् ॥ १४ ॥
तस्मिन् धृते दरिद्रत्वं देशत्यागश्च जायते ।
भेद-संश्रयङ्खत्रासस्तेन दंष्ट्रिभयम्भवेत् ॥ १५ ॥
भिन्नं भिन्नमिति प्राहुर्भार्य्यापुत्र-विनाशनम् ।
मृत्तिका यस्य गर्भस्था लक्ष्यते रत्नकोविदैः ॥ १६ ॥
मृत्तिकागर्भकं नाम त्वग्दोष-जनकम्भवेत् ।
दृशत् प्रलक्ष्यते गर्भे अश्मगर्भं विनाशकृत्(द्धृत्) ॥ १७ ॥
चित्रवर्णं इवाभाति चित्रकः कुलनाशनः ॥ १८ ॥
तथा च,—
अभ्रक-पटलच्छाया त्रासश्चित्रक एव च ।
मृदश्मगर्भरौक्षाणि महानीलेषु दूषणम् ॥ १९ ॥
अथच्छाया,—
नीलीरससमाभासा वैष्णवीपुष्पसन्निभा ।
नवनी-पुष्पसंकाशा नीलेन्दीवर-सन्निभा ॥ २० ॥
अतसीपुष्पसंकाशा चाषपक्ष-समच्छविः ।
कृष्णाद्रि-कर्णिकापुष्प समान-द्युति-धारिणी ॥ २१ ॥
मयूरकण्ठ-सच्छाया शम्भु-कण्ठसमा तथा ।
विष्णुदेह-समाभासा भृङ्गपक्षसम-प्रभा ॥ २२ ॥
इन्द्रनीले धृते शुद्धे शौरिरेषः प्रसीदति ।
आयुः कुलं यशो बुद्धिर्लक्ष्मी शोभा च वर्द्धते ॥ २३ ॥
धार्य्यमानस्य ये दृष्टाः पद्मरागमणेर्गुणाः ।
धारणादीन्द्रनीलस्य तानेवाप्नोति मानवः ॥ २४ ॥

अथ परीक्षा [ इन्द्रनीलस्य ] ।

काचोत्पलकरवीर स्फटिकाद्या इह बुधैः स वैदूर्य्याः ।

कथिता विजातय इमे सदृशा मणिनेन्द्रनीलेन ॥ २५ ॥
गुरुभावकठिन-भावावेतेषां नित्यमेव विज्ञेयौ ।
काचाद् यथावदुत्तर-विवर्द्धमानौ विशेषेण ॥ २६ ॥
इन्द्रनीलो यदा कश्चिद्विभर्त्यातास्रवर्णताम् ।
रत्नाणीयौ तथा तास्रौ करवीरोत्पलावुभौ ॥ २७ ॥
यावन्तश्च क्रमेदग्निं पद्मरागः प्रयोगतः ।
इन्द्रनीलमणिस्तस्मात् क्रमेत सुमहत्तरम् ॥ २८ ॥
तदाकर-समुद्भूतो मत्तभृङ्ग-सम-द्युतिः ।
दीप्तिच्छाया-समाविष्टो भ्रामरो मणिरुच्यते ॥ २९ ॥
आरक्तता सदा तत्र तदा टीट्टिभसंज्ञितः ।
तस्य धारणमात्रेण गर्भिणी स्त्री प्रसूयते ॥ ३० ॥

अथ मूल्यम्,—

यत्पद्मरागस्य महागुणस्य,
मूल्यम्भवेन्माष(स)-समुत्थि(त्थि)तस्य ।
तदिन्द्रनीलस्य महागुणस्य ;
सुवर्णसंख्या तुलितस्य मूल्यम् ॥ ३१ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ इन्द्रनील परीक्षा ॥

———*———

## अथ मरकत परीक्षा ।

गरुड़पुराणे,—

दानवाधिपतेः पित्तमादाय भुजगाधिपः ।
द्विधा कुर्व्वन्निव व्योम-सत्वरं वासुकिर्ययौ ॥ ३२ ॥
(स तदा स्व-शिरोरत्न-प्रभादीप्ते नभोऽम्बुधौ ।

राजतः स महानेकः खण्डसेतुरिवावभौ) ॥ ३३ ॥
ततः पक्ष-निपातेन संहरन्नपि रोदसी।
गरुत्मान् पन्नगेन्द्रस्य प्रहर्त्तुमुपचक्रमे ॥ ३४ ॥

सहसैव मुमोच तत्फणीन्द्रः,
सुरसाभ्युक्त तुरस्कपादपायाम् ।
नलिकावनगन्ध-वासितायां ;
वरमाणिक्यगिरेरुपत्यकायाम् ॥ ३५ ॥
तस्य प्रपात समनन्तर-कालमेव,
तद्दरालयमतीत्य रमासमीपे ।
स्थानं क्षितेरुपपयोनिधि-तीर लेखम् ;
तत् प्रत्ययात्मकरता-करताञ्जगाम ॥ ३६ ॥
तत्रैव किञ्चित् पततस्तु पित्तात्,
उत्पत्य जग्राह ततो गरुत्मान् ।
मूर्च्छा परीतः सहसैव घोणा-;
रन्ध्रद्वयेन प्रमुमोच सर्वम् ॥ ३७ ॥
तत्रा कठोर-शुककण्ठ-शिरीषपुष्प,
खद्योत-पृष्ठवर-शाद्वल-शैवलानाम् ।
कह्लार शष्पक भुजङ्गभुजाश्च पत्र- ;
प्रान्तत्विषो मरकताः शुभदा भवन्ति ॥ ३८ ॥
तद्दयत्र भोगीन्द्र-भुजा विमुक्तम्,
पपात पित्तं दितिजाधिपस्य ।
तस्याकरस्यातितरां स देशो ;
दुःखोपलभ्यश्च गुणैश्च युक्तः ॥ ३९ ॥

तस्मिन् मरकतस्थाने यत्किञ्चिदुपजायते ।
तत्सर्वं विषरोगाणां प्रशमाय प्रकीर्त्यंते ॥ ४० ॥

सर्वमन्त्रौषधिगुणैर्यन्नशक्यं चिकित्सितुम् ।
महाहि-दंष्ट्राप्रभवं विषं तत्तेन शाम्यति ॥ ४१ ॥
अन्यमप्याकरे यत्र यद्दोषैरपवर्ज्जितम् ।
जायते तत्पवित्राणामुत्तमं परिकीर्त्तितम् ॥ ४२ ॥
अत्यन्तहरिद्वर्णं कोमलमर्च्चिर्विभेद जटिलञ्च ।
काञ्चनचूर्णनान्तःपूर्णमिव लक्ष्यते यच्च ॥ ४३ ॥
युक्तं संस्थानगुणैः समरागं गौरवेण विहीनम् ।
सवितुः करसंस्पर्शात् छुरयति सर्वाश्रमं दीप्त्या ॥ ४४ ॥
हित्वा च हरितभावं यस्यान्तर्विनिहिता भवेद्दीप्तिः ।
अचिरप्रभा प्रभाहत नवशाद्वल-सन्निभा भाति ॥ ४५ ॥
यच्च मनसः प्रसादं विदधाति निरीक्षितमतिमात्रम् ।
तन्मरकतं महागुणमिति रत्न-विदां मनोवृत्तिः ॥ ४६ ॥
यस्तु भास्करसंस्पर्शाद्वस्त-न्यस्तो महामणिः ।
रञ्जयेदात्म-पादैस्तु महामरकतं हि तत् ॥ ४७ ॥
चतुर्द्धा जातिभेदस्तु महामरकते मणौ ।
छायाभेदेन विज्ञेयो चतुर्वर्ण(र्ग)स्य लक्षणैः ॥ ४८ ॥

## अथ मरकतमणेश्छाया ।

भवेदष्टविधा छाया मणेर्मरकतस्य च ।
वर्हि-पुच्छसमाभासा चाष-पत्र-समापरा ॥ ४९ ॥
हरित्-काच-निभा चान्या तथा शैवाल-सन्निभा ।
खद्योत-पृष्ठ-संकाशा वालकीरसमा तथा ॥ ५० ॥
नवशाद्वलसच्छाया शिरीष-कुसुमोपमा ।
एवमष्टौ समाख्यातांश्छाया मरकताश्रयाः ॥ ५१ ॥
छायाभिर्युक्तमेताभिः श्रेष्ठं मरकतम्भवेत् ।

पद्मरागगतः स्वच्छो जलविन्दुर्यथा भवेत् ।
तथा मरकतच्छाया श्यामला हरितामला ॥ ५२ ॥

अथ दोष-गुणाः ।

दोषाः सप्त भवन्त्यस्य गुणाः पञ्चविधा मताः ।
अस्निग्धं रूक्षमित्युक्तं व्याधिस्तस्य धृते भवेत् ॥ ५३ ॥
विस्फोटः स्यात् सपिड़के तत्र शस्त्रहतिर्भवेत् ।
स पाषाणे भवेदिष्टनाशो मरकते धृते ॥ ५४ ॥
विच्छायं मलिनं प्राहुर्वार्य्यते नतु धार्य्यते ।
शर्करं कर्करायुक्तं पुत्रशोक-प्रदं धृतम् ॥ ५५ ॥
जरठं (१) कान्तिहीनन्तु दंष्ट्रिवह्निभयावहम् ।
कल्माषवर्णं धवलं ततो मृत्यु-भयम्भवेत् ।
इति दोषाः समाख्याता वर्ण्यन्तेऽथ महागुणाः ॥ ५६ ॥

अथ गुणाः ।

निर्म्मलं कथितं स्वच्छं गुरु स्याद् गुरुतायुतम् ।
स्निग्धं रूक्षविनिर्मुक्तं मरजस्कमरेणुकम् ॥ ५७ ॥
सुरागं रागबहुलं मणेः पञ्चगुणा मताः ।
एतैर्युक्तं मरकतं सर्व्वपाप भयापहम् ॥ ५८ ॥
गजवाजि-रथान्दत्त्वा विप्रेभ्यो विस्तराब्धि मे ।
तत्फलं समवाप्नोति शुद्धे मरकते धृते ॥ ५९ ॥
धनधान्यादि-करणे तथा सैन्य-क्रियाविधौ ॥ ६० ॥
विषरोगोपशमने कर्म्मस्वाथर्व्वणेषु च ।
शस्यते मुनिभिर्यस्मादयं मरकतो मणिः ॥ ६१ ॥

---

(१) जठरं इति (ख) पुस्तक पाठः ।

तथा च,—

स्वच्छता गुरुता कान्तिः स्निग्धत्वं पित्तकारणम् ।
हरित्त्वरञ्जकत्वञ्च सप्त मारकते गुणाः ॥ ६२ ॥

## अथ कृत्रिमाकृत्रिम-परीक्षा ।

कृत्रिमत्वं सहजत्वं दृश्यते सूरिभिः क्वचित् ।
घर्षयेत् प्रस्तरे व्यक्तं काचस्तस्माद्विपद्यते ॥ ६३ ॥
लेखयेल्लौहभृङ्गेण चूर्णेनाथ विलेपयेत् ।
सहजः कान्तिमाप्नोति कृत्रिमो मलिनायते ॥ ६४ ॥
भल्लातः (कः) पुत्रिका काचस्तद्वर्णमनुयोगतः ।
मणेर्मरकतस्यैते लक्षणीया विजातयः ॥ ६५ ॥
क्षौमेण वाससा घृष्टा दीप्तिं त्यजति पुत्रिका ।
लाघवेनैव काचस्य शक्या कर्त्तुं विभावना ॥ ६६ ॥

## अथ मरकतमूल्यम् ।

तथा च गारुड़े,—

तुलया पद्मरागस्य यन्मूल्यमुपजायते ।
लभ्यतेऽभ्यधिकन्तस्मात् गुणैर्मरकतं स्मृतम् ॥ ६७ ॥
यथा च पद्मरागाणां दोषैर्मूल्यं प्रहीयते ।
ततोऽस्मिन्नपि सा हानिर्दोषैर्मरकते भवेत् ॥ ६८ ॥

तथाच,—

गुणपिण्डसमायुक्ते हरितश्यामभास्वरे ।
मूल्यं द्वादशकं प्रोक्तं जातिभेदेन सूरिभिः ॥ ६९ ॥
यवैकेन शतं पञ्च सहस्रं द्वितये यवे ।
त्रिभिश्चैव सहस्रे द्वे चतुर्भिश्च चतुर्गुणम् ॥ ७० ॥

अष्टानां मुख्यरत्नानां लक्षणानि निरूप्य च।
वक्ष्यन्ते चान्यरत्नानां लक्षणानि यथाक्रमम् *॥ ७१ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ मरकत † परीक्षा ॥



## अथ पुष्पराग परीक्षा।

पतिता या हिमाद्रौ हि त्वचस्तस्य सुरद्विषः।
प्रादुर्भवन्ति ताभ्यस्तु पुष्परागा महागुणाः ७२ ॥
श्रणपुष्पसमः कान्त्या स्वच्छभावः सुचिक्कणः।
पुत्रधनप्रदः पुण्यः पुष्परागमणिर्धृतः ॥ ७३ ॥
दैत्यधातु समुद्भूतः पुष्परागमणिर्द्विधा।
पद्मरागाकरे कश्चित् कश्चित्तार्क्ष्योपलाकरे ॥ ७४ ॥
ईषत्पीतच्छविच्छाया स्वच्छं कान्त्या मनोहरम्।
पुष्परागमिति प्रोक्तं रङ्गसोम महीभुजा ॥ ७५ ॥
ब्रह्मादि जातिभेदेन तद्विज्ञेयं चतुर्व्विधम्।
छाया चतुर्विधा तस्य सिता पीतासितासिता ॥ ७६ ॥
मूल्यं वैदूर्य्यमणेरिव गदितं ह्यस्य रत्नशास्त्रविद्भिः।
धारणफलञ्च तद्वत् किन्तु स्त्रीणां सुतप्रदो भवति ॥ ७७ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ पुष्परागपरीक्षा ॥

---

* श्लोकोऽयं (ख) पुस्तकेऽधिकः दृश्यते।

† अन्यत्तु गारुड़-शुक्रनीति-मानसोल्लास-अगस्तिमत-राजनिर्घण्ठ मणिपरीक्षास्ववगन्तव्यम्। अस्य नाम मरकत-राजनील-गरुड़ाङ्कित-रौहिणेय-सौपर्ण-गरुड़ोद्गीर्ण-बुधरत्न-'पान्ना' इत्यभिधीयते कोशेषु।

# अथ कर्कतन-मणि परीक्षा ।

तथा च गारुड़े,—

वायुर्नखान् दैत्यपतेर्गृहीत्वा चिक्षेप सम्यग्य वनेषु हृष्टः ।

ततः प्रसूतं पवनोपपन्नं कर्कतनं पूज्यतमं पृथिव्याम् ॥ ७८ ॥

वर्णेन तद्रुधिरसोममधु प्रकाश-

मातास्रपीत दहनोज्ज्वलितं विभाति ।

नीलं पुनः खलु सितं परुषं विभिन्नम् ;

व्याध्यादिदोषहरणेन न तद्विभाति ॥ ७९ ॥

स्निग्धा विशुद्धाः समरागिणश्च, आपीतवर्णा गुरवो विचित्राः ।

त्रासव्रण-व्याधि विवर्जिताश्च ; कर्कतनास्ते परमाः पवित्राः ॥८०॥

पत्रेण काञ्चनमयेन तु वेष्टयित्वा,

हस्ते गलेऽथ धृतमेतदतिप्रकाशम् ।

रोग प्रणाशनकरं कलिनाशनञ्च ;

आयुस्करं कुलकरञ्च सुखप्रदञ्च ॥ ८१ ॥

एवंविधं बहुगुणं मणिमावहन्ति,

कर्कतनं शुभमलङ्कृतये नरा ये ।

ते पूजिता बहुधना बहुवान्धवाश्च ;

नित्योज्ज्वला प्रमुदिता अपि ये भवन्ति ॥ ८२ ॥

एके पिनद्ध विकृताकुल-नीलभासः,

प्रम्लानरागलुलिताः कलुषा विरूपाः ।

तेजोऽति दीप्ति कुलपुष्टि विहीनवर्णाः ;

कर्कतनस्य सदृशं वपुरुद्वहन्ति ॥ ८३ ॥

कर्कतनं यदि परीक्षितवर्णरूपं,

प्रत्यग्रभास्वर दिवाकर सुप्रकाशम् ।

तस्योत्तमस्य मणिशास्त्रविदा महिम्ना ;
तुल्यन्तु मूल्यमुदितं तुलितस्य कार्य्यम् ॥८४॥

इति श्रीभोजराजीये युक्तिकल्पतरौ कर्कैतनपरीक्षा ॥

---

## अथ भीष्ममणि परीक्षा ।

तथा च गरुड़पुराणे,—

हिमवत्युत्तरे देशे वीर्य्यं पतितं सुरद्विषस्तस्य ।
सम्प्राप्तमुत्तमानामाकरतां भीष्मरत्नानाम् ॥ ८५ ॥

तथा च,—

कलिङ्गे मगधे चैव मलये च हिमालये ।
भीष्मरत्न समुत्पातस्तस्य लक्षणमुच्यते ॥ ८६ ॥
शुक्लाः शङ्खाब्जनिभाः श्योनाकसन्निभाः प्रभावन्तः ।
प्रभवन्ति ततस्तरुणा वज्रनिभा भीष्मपाषाणाः ॥ ८७ ॥
हिमाद्रि प्रतिवद्धं शुद्धमपि श्रद्धया विधत्ते यः ।
भीष्ममणिं ग्रीवादिषु स सम्पदं सर्वदा लभते ॥ ८८ ॥
गुणयुक्तस्य तस्यैव धारणान्मुनिपुङ्गव ।
विषाणि तानि नश्यन्ति सर्व्वाण्येव महीतले ॥ ८९ ॥
विषमा ना वाधन्ते ये तमरण्यनिवासिनः समीपेऽपि ।
द्वीपिवृकशरभकुञ्जरसिंहव्याघ्रादयो हिंस्राः ॥ ९० ॥

तस्योत्थावलित ज्ञतिनो भवन्ति भयं न चापि समुपस्थितम् ।
भीष्ममणिगुणयुक्तः सम्यक् सम्प्राप्ताङ्गुलिविनतयः ।
पितृतर्पणे पितृणां तृप्तिर्बहुवार्षिकी भवति ॥ ९१ ॥
शाम्यन्त्युद्भूतान्यपि सर्पाण्डजाखुवृश्चिकविषाणि ।

सलिलाग्निवैरितस्करभयानि भीमानि नश्यन्ति ॥ ९२ ॥
शैवालवलाहकाभं परुषं पीतप्रभं प्रभाहीनम्।
मलिनद्युतिं विवर्णं दूरात् परिवर्जयेत् प्राज्ञः ॥ ९३ ॥
मूल्यं प्रकल्प्यमेषां विबुधवरैर्देशकालविज्ञानात्।
दूरे भूतानां बहु किञ्चिन्निकट-प्रसूतानाम् ॥ ९४ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ भीष्ममणिपरीक्षा ॥

—————*—————

## अथ पुलकमणि परीक्षा।

पुण्येषु पर्व्वतवरेषु च निम्नगासु,
स्थानान्तरेषु च तथोत्तरदेशगत्वात्।
संस्थापिताश्च नखरा भुजगैः प्रकाशं;
सम्पूज्य दानवपतिं प्रथिते प्रदेशे ॥ ९५ ॥
दाशार्णवागदवमेकलकालगादौ,
गुञ्जाञ्जनक्षौद्रमृणालवर्णाः।
गन्धर्व्व-वह्नि-कदली सदृशावभासाः;
एते प्रशस्ताः पुलकाः प्रसूताः ॥ ९६ ॥
शङ्खाब्जभृङ्गार्क विचित्रभङ्गाः
शूद्रैरुपेताः परमाः पवित्राः।
मङ्गल्य युक्ता बहुभक्ति चित्रा;
वृद्धिप्रदास्ते पुलका भवन्ति ॥ ९७ ॥
काकखरासभ शृगाल वृकोग्ररूपै-
र्गृध्रैः समांसरुधिराद्रमुखैरुपेताः।

मृत्युप्रदास्तु विदुषा परिवर्ज्जनीया-
मूल्यं पलस्य कथितञ्च शतानि पञ्च ॥ ९८ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ पुलकमणि-परीक्षा

—*—

## अथ रुधिराख्यपरीक्षा ।

हुतभुग्रूपमादाय दानवस्य यथेप्सितम् ।
नर्म्मदायां निचिक्षेप किञ्चिच्चीनादि भूतले ॥ ९९ ॥

तत्रेन्द्र गोपकलितं शुकवक्त्रवर्णं,
संस्थानतः प्रकटपीलुसमानमात्रम् ।
नाना प्रकारविहितं रुधिराख्यरत्न-
मुद्धृत्य तस्य खलु सर्व्वसमानमेव ॥ १०० ॥
मध्येन्दुपाण्डुरमतीव विशुद्धवर्णं,
तच्चेन्द्रनीलसदृशं पटलं तुले स्यात् ।
सैश्वर्य्यभूत्यजननं कथितं तदेव,
पक्वञ्च तत् किल भवेत् सुरवज्रवर्णम् ॥ १ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ रुधिराख्यपरीक्षा ।

—*—

## अथ स्फटिक लक्षणम् ।

तथा च गारुड़े,—
कावेर-विन्ध्य-यवन-चीन-नेपाल भूमिषु ।
लाङ्गली व्यकिरन्मेदो दानवस्य प्रयत्नतः ॥ २ ॥
आकाशशुद्धं तैलाख्यमुत्पन्नं स्फटिकं ततः ।
मृणालशङ्ख-धवलं किञ्चित् वर्णान्तरान्वितम् ॥ ३ ॥

न तत्तुल्यं हि रत्नानामथवा पापनाशनम्।
संस्कृतं शिल्पिना सद्यो मूल्यं किञ्चिन्नभेत्ततः॥ ४॥

तथा च,—

हिमालये सिंहले च विन्ध्याटवीतटे तथा।
स्फटिकं जायते चैव नानारूपं समप्रभम्॥ ५॥
हिमाद्रौ चन्द्रसङ्काशं स्फटिकं तद् द्विधा भवेत्।
सूर्य्यकान्तञ्च तत्रैकं चन्द्रकान्तं तथापरम्॥ ६॥
सूर्य्यांशु-स्पर्शमात्रेण वह्निं वमति यत् क्षणात्।
सूर्य्यकान्तं तदाख्यातं स्फटिकं रत्नवेदिभिः॥ ७॥
पूर्णेन्दुकरसंस्पर्शात् अमृतं स्रवति क्षणात्।
चन्द्रकान्तं तदाख्यातं दुर्लभं तत् कलौ युगे॥ ८॥
अशोक पल्लवच्छायं दाड़िमीबीज सन्निभम्।
विन्ध्याटवीतटे देशे जायते मन्दकान्तिकम्॥ ९॥
सिंहले जायते कृष्णमाकरे गन्धनीलके।
पद्मरागभवे स्थाने द्विविधं (१) स्फटिकं भवेत्॥ १०॥
अत्यन्तनिर्म्मलं स्वच्छं स्रवतीव जलं शुचि।
ज्योतिर्ज्ज्वलनमाश्लिष्टं मुक्ताज्योतीरसं द्विज॥ ११॥
तदेव लोहिताकारं राजावर्त्तमुदाहृतम्।
आनीलं तत्तु पाषाणं प्रोक्तं राजमयं शुभम्॥ १२॥
ब्रह्मसूत्रमयं यत्तु प्रोक्तं ब्रह्ममयं द्विज॥ १३॥
इति श्रीभोजराजीये युक्तिकल्पतरौ स्फटिकपरीक्षा।

---

(१) विविधम् इति (क) पुस्तक पाठः।

## अथ अयस्कान्तलक्षणम् ।

यद्दूरादपि लौहानि समाकर्षति वेगवत् ।
अयस्कान्तमिदं ज्ञेयं तदर्थं द्विविधं बुधैः ॥ १४ ॥
उत्तमं नीलमसृणं अधमं खरपिङ्गरम् ।
प्रायः समुद्रतोयेषु लभ्यते प्रस्तरा इति ॥ १५ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ अयस्कान्तपरीक्षा ॥

मरकतमणेः स्थाने मिश्रसंज्ञं भवेत नु ।
तस्य गुण्ठनमात्रेण व्रणो रोहति तत्क्षणात् ॥ १६ ॥
इति मिश्रकलक्षणम् ।

——००——

## अथ शङ्खलक्षणम् * ।

क्षीरोदकूलेऽपि सौराष्ट्रदेशे,
तदन्यतोऽपि प्रभवन्ति शङ्खाः ।
अच्छवर्णाः शशि-शुभ्रभासः ;
सुसूक्ष्मवक्त्रा (१) गुरवो महान्तः ॥ १७ ॥
ते वाम दक्षिणावर्त्त भेदेन द्विविधा मताः ।
दक्षिणावर्त्त शङ्खस्तु कुर्य्यादायुर्यशोधनम् ॥ १८ ॥
तेनैव शिरसा यस्तु श्रद्दधानः प्रतीच्छति ।
वारि हीत्वा स पापानि पुण्यमाप्नोति मानवः ॥ १९ ॥

---

(१) ससूक्ष्मरन्ध्रा इति (ख) पुस्तके पाठः ।

---

* ब्रह्मवैवर्त्ते प्रकृतिखण्डे, वाराहे प्रबोधनीमाहात्म्याध्याये, पाद्मे उत्तरखण्डे भरतधृत ब्रह्माण्डपुराणे, शब्दरत्नावल्यां राजवल्लभे चाप्यदनुसन्धेयम् ।

वृत्तत्वं स्निग्धताच्छत्वं शङ्कस्येति गुणत्रयम् ।
आवर्त्तभङ्गदोषो हि हेम-योगाद्विनश्यति ॥ २० ॥
ब्रह्मादि-जातिभेदेन स पुनस्तु चतुर्व्विधः ॥ २१ ॥
तद्‌यथा,—
ये स्निग्धमसृणाकारा मृदवो लघवस्तथा ।
ब्राह्मणाः प्रस्तरा ज्ञेयाः सर्व्वकर्म्मसु शोभनाः ॥ २२ ॥
ये दृढ़ाङ्गाः सुगुरवः तथांशांश-विभागिनः ।
अश्मानः क्षत्रिया ज्ञेयाः कर्कशाङ्गास्तथैव च ॥ २३ ॥
मृदवो गुरवो ये तु ये स्नेहेनेव रचिताः ।
ते वैश्याः सु(स्व)विभक्तांशा युज्यन्ते सर्व्वकर्म्मसु ॥ २४ ॥
ये कर्कशावृताङ्गाश्च कर्कशा ये प्रतिष्ठिताः ।
येऽत्यन्तगुरवः स्निग्धाः ते शूद्राः प्रस्तराधमाः ॥ २५ ॥
इति प्रोक्तमशेषेण सम्यक् पाषाण-लक्षणम् ।
विचार्य्य मतिमान् कार्य्ये नियोक्तव्यं विचक्षणैः ॥ २६ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ शङ्करत्न परीक्षा ॥
( इत्यलङ्करण युक्तिः । )

——— ०० ———

## अथास्त्रयुक्तिः ।

दण्डसाध्यं यतो राज्यं स दण्डः शास्त्र-संश्रितः ।
शस्त्राणि भूमिपालानां निरूप्यन्ते ततः क्रमात् ॥ २७ ॥

अथ गणना ।

खड्गचर्म्म-धनुर्व्वाणौ शल्यभल्लौ तथापरौ ।
अर्द्धचन्द्रश्च नाराचः शक्तियष्टी तथापरे ॥ २८ ॥

परशुचक्रशूले च परिघश्चैवमादयः ।
शस्त्रभेदाः समुद्दिष्टाः श्रीमद्भोजमहीभुजा ॥ २९ ॥

वात्स्यस्तु,—

अस्त्रन्तु द्विविधं प्रोक्तं निर्म्मायं मायिकं तथा ।
खड्गादिकन्तु (२) निर्म्मायं मायिकं दहनादिकम् ॥ ३० ॥
दहनोऽथ जलं काष्ठं लोष्ट्रं शब्दादयस्तथा ।
तप्ततैलादिकञ्चैव मायिकस्यास्त्रमुच्यते ॥ ३१ ॥
खड्गादीनान्तु गणना पूर्व्वमेव निदर्शिता ।
अस्त्रात्मनैव निर्दिष्टः कवचादिरपीष्यते ॥ ३२ ॥
तल्लक्षणं संग्रहेण प्रवक्ष्यामि निबोधत ।
काष्ठं चर्म्म च सकलं त्रयमेतत्तु दुस्तरम् ॥ ३३ ॥
यथोत्तरं गुणयुतं यथापूर्व्वन्तु निन्दितम् ।
शरीर-वेवकत्वन्तु लघुत्वं दृढ़ता तथा ॥ ३४ ॥
दुर्भेद्यत्वे तु कथितः कवचे गुणसंग्रहः ।
सच्छिद्रतातिगुरुता तनुता सुखभेद्यता ॥ ३५ ॥
कवचानां विनिर्द्दिष्टः समासाद्दोषसंग्रहः ।
अत्र वर्णो विनिर्दिष्टः क्रमादेवं चतुर्विधः ॥ ३६ ॥
सितोरक्तस्तथापीतः कृष्णो ब्रह्मादिषु क्रमात् ।
केचित् कुर्व्वन्ति कुशलाः कवचं धातुसम्भवम् ।
कनकं रजतं ताम्रं लौहस्तेषु यथाक्रमम् ॥ ३७ ॥

अथ खड्गपरीक्षा ।

अङ्गं रूपं तथा जातिर्नेत्रारिष्टेति भूमिका ।
ध्वनिर्मानमिति प्रोक्तं खड्गज्ञानाष्टकं शुभम् ॥ ३८ ॥

---

(२) खड्गादिकञ्च इति (ग) पुस्तकपाठः

अभिन्ने दृश्यते यादृग् विभिद्य घटिते तथा।
यदेव दृश्यते चिह्नं तदङ्गं संप्रचक्षते ॥ ३९ ॥
नील कृष्णादिकं खड्गे रूपमित्यभिधीयते।
तेनैव यत्प्रतीतं स्यात् तज्जातिभिरिति (३) गद्यते ॥ ४० ॥
अङ्गातिरिक्तं यज्जाति स्तन्माहात्म्योपसूचकम्।
तन्नेत्रमिति जानीयात् खड्गे खड्गविशारदाः ॥ ४१ ॥
अङ्गातिरिक्तं खड्गादि यच्छुभत्वापसूचकम्।
तदरिष्टमिति प्राहुर्भूमिरङ्गादि-धारणम् ॥ ४२ ॥
यः खड्गे जायते शब्दो नखदण्डादिनाहते।
स ध्वनिस्तुलना मानं ज्ञानमष्टविधन्त्विदम् ॥ ४३ ॥
पश्चाद्या निपुणैः खड्गे सम्भाव्यन्तेऽपि कृत्रिमाः।
अन्त्यावकृत्रिमौ ज्ञेयौ तावेव सहजाविति ॥ ४४ ॥
शतमङ्गानि चत्वारि रूपाणि जातयस्तथा।
त्रिंशन्नेत्राणि जानीयादरिष्टानि तथैव च ॥ ४५ ॥
भूमिश्च द्विविधा ज्ञेया ध्वनिरष्टविधो मतः।
मानन्तु द्विविधं प्रोक्तमित्येषां संग्रहो मतः ॥ ४६ ॥

### अथ खड्गस्य शताङ्गगणना।

लौहार्णवे,—

रूप्यस्वर्णगजोरुवुकमदन(४)-स्थूलाङ्ग कृष्णारुणः
श्वेताम्भोज गदातिमानन (५)कलाग्रन्थिस्थिरा तैत्तिराः।
मालाजीवक षट्पदोर्मिमरिच व्यालाश्ववर्णाञ्जन-

---

(३) तज्जातिरिति (क) पुस्तक पाठः।

(४) रौप्यस्वर्णगजोरुदमन इति (ख) पुस्तकपाठः।

(५) गदातिमानलया इति (ग) पुस्तकपाठः।

चैत्रे (६) क्षुद्रकमक्षिका तुषयव-व्रीहिक्षुमा सर्षपाः ॥ ४७ ॥
सिंही तण्डुलगोशिरः (७) शिवनखग्राहाक्षि केशोपल-
द्रोणी काककपाल पत्रतुवरी विम्बीफलीसर्षपाः ।
नीलीरक्तवचा रसोन सुमना जिह्वा(ह्ले)स(श)मीरोहित-
प्रोष्ठी मारिषमार्कवाथुर(८)तड़िन्मेषाद्रि गुञ्जाशिवाः ॥४८॥
दूर्व्वाबिल्वमसूर टुण्टुक शटीमार्ज्जारिका केतकी
मूर्व्वावज्रकलाय चम्पकवना(ला)न्यग्रोधवंशासनाः ।
ज्येष्ठीजालपिपीलिकानलरजः कुष्माण्डरोमस्नुही-
कर्कन्धुर्वकुलारसाल महिषत्वच्छत्त्र वक्रा इति ॥ ४९ ॥
प्रोक्तालौहविशारदेन मुनिना खड्गस्य भेदाः क्रमात् ॥५०॥

अथ तस्य चत्वारि रूपाणि ।

नीलः कृष्णः पिषङ्गश्च धूम्रश्चेति चतुर्विधः ।
वर्णप्रकर्षः खड्गानां कथितो मुनिपुङ्गवैः ॥ ५१ ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति चतुर्विधः ।
जातिभेदो विनिर्द्दिष्टः खड्गानां मुनिपुङ्गवैः ॥ ५२ ॥

अथ त्रिंशन्नेत्राणि ।

चक्रं पद्मं तथा (गदा) खड्गो (शङ्खो) डमरुर्धनुरङ्कुशः ।
छत्त्रं पताका वीणा च मत्स्यलिङ्गध्वजेन्दवः ॥ ५३ ॥
कुम्भः शूलश्च शार्द्दूलः सिंहः सिंहासनं गजः ।
हंसो मयूरजिह्वा च दशनः खड्ग एव च ॥ ५४ ॥

---

(६) चौद्र इति (क) पुस्तक पाठः ।
(७) गोशिराशिव इति (ख) पुस्तक पाठः ।
(८) मार्कवा-खुर इति (ग) पुस्तक पाठः ।

पुत्रिका चामरः शैलः पुष्पमाला भुजङ्गमः।
त्रिंशदेतानि नेत्राणि खड्गानां कथितानि वै ॥ ५५ ॥

अथ त्रिंशदरिष्टानि।

छद्रं (१) काकपदं रेखा भेको मूषिक एव च।
विड़ालः शर्करा नीली मशको भृङ्गसूचके ॥ ५६ ॥
त्रिविन्दुः (२) कालिका पावी (दारी) कपोतः काक एव च।
खर्परः शकली क्रोड़ी कुशपुत्रकजालिके ॥ ५७ ॥
करालकङ्कखर्जूर शृङ्गपुच्छ खनित्रकम्।
लाङ्गलं शूर्पं वड़िशो मुनिना तत्त्ववेदिना ॥ ५८ ॥
प्रोक्तान्येतान्यरिष्टानि खड्गानां त्रिंशदेव हि।
दिव्य भौमविभागेन भूमिस्तु द्विविधा भवेत् ॥ ५९ ॥
हंसकांस्याभ्रढक्कानां काकतन्त्री खराश्मनाम्।
धनयोऽष्टविधाः प्रोक्ता नागार्ज्जुन-मुनेर्मताः ॥ ६० ॥
उत्तमाधम भेदेन मानस्तद्द्विविधं भवेत्।
इति प्रोक्तानि सूत्राणि खड्गानां ज्ञानहेतवे ॥ ६१॥
एतानि तत्त्वतो ज्ञात्वा भवेन्नृपति-पूजितः ॥ ६२ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ खड्गपरीक्षायां सूत्राध्यायः।

—•—

तत्र प्रथमतोऽङ्गानां लक्षणानि निबोधत ॥

लौहद्वीपे,—

रौप्यपत्रसमा भूमिरङ्गं श्वेतं प्रतीयते।
ऊर्द्धं तत्तु महामूल्यं रूप्यवज्ञमुशन्ति तम् ॥ ६३ ॥

(१) चत्रं इति (क) पुस्तक पाठः।
(२) त्रिविद्रुः इति (ख) पुस्तक पाठः।

एष खड्गवरो दद्याल्लक्ष्मीमायुर्यशोबलम् ।
स्वर्णरेखावली तन्वी यद्भूमौ निकषोपमा ॥ ६४ ॥
स्वर्णवज्रमिति प्राहुरायुर्लक्ष्मीजय-प्रदम् ।
गजशुण्डाकृतिर्भूमौ कृष्णायामङ्गसम्भवः ॥ ६५ ॥
गजवज्रमिति प्राहुः रक्तस्पर्शी तु तद्विशेत् ।
ज्वरादि व्याधिगमनं तस्य प्रक्षालनाम्भसा ॥ ६६ ॥
अपि क्षीणोऽपि भूपालस्तद्वीर्य्यात् साधमेन्महीम् ।
एरण्डवीजप्रतीम मङ्गं भूमिः सितेतरा ॥ ६७ ॥
कवुवज्रमिदं नाम्ना शत्रुदर्प-क्षयङ्करः ।
एतस्य स्पर्शमात्रेण नरः सम्यग्विमुच्यते ॥ ६८ ॥
महिषाख्यमिदं वज्रं केचिदाहुर्मनीषिणः ।
अङ्गं दमद(न)पत्राभं खड्गे यस्मिन् प्रतीयते ॥ ६९ ॥
विद्याद्दमनवज्रस्य तज्ज्ञेयं द्विविधं बुधैः ।
नीला शुभ्रा भवेद्भूमिस्तत्रनीला गरीयसी ॥ ७० ॥
तस्मिन् पर्य्युषितं तोयं गन्धे दमनकोपमम् ।
तत्प्रभावान्महीपालः कृत्स्नां पृथ्वीं हि साधयेत् ॥ ७१ ॥
शार्ङ्गधरस्य,—

एकास्थूलासिता रेखा-भूमिर्नीला दृढ़ा यदि ।
स्थूलाङ्गमङ्गवज्रं तद्विद्याल्लक्ष्मी यशः प्रदम् ॥ ७२ ॥
एतत् क्षते (१) भवेच्छोथः स्थूलस्थिरतरस्थितिः ।
एतं महान्तमपरे वदन्ति खड्गकोविदाः ॥ ७३ ॥
घृष्टायां दृश्यते भूमौ अङ्गस्य प्रतिविम्बितम् ।
अङ्गवज्रं भवेत्तस्य द्विधाभूमिः सितासिता ॥ ७४ ॥

---

(१) चीत इति (क) पुस्तक पाठः ।

लौहप्रदीपेऽपि।

निरङ्गं रूप्यपत्राभमोषन्मणिनिभञ्च यत्।
दुर्लभं तन्महामूल्यं कान्तलौहं प्रचक्षते॥ ७५॥
कृष्णाभूमिर्भवेत् स्वच्छा पीता वज्राङ्गसङ्गता।
कृष्णवज्रमिति प्राहुस्तत्स्वते मोह उच्यते॥ ७६॥
प्रदीपेऽपि,—
कृष्णाभूमिं सुवर्णाभमोषच्छुक्लाङ्गसङ्गतम्।
डाहुलीवज्रकं (१) विद्यात् कालसंज्ञमथापरे॥ ७७॥
अरुणं सूक्ष्ममूर्द्ध्वोदङ्गं भूमिः सितेतरा।
अरुणाख्यमिदं वज्रं शत्रुदर्प-निसूदनम्॥ ७८॥
सूर्य्यांशुस्पर्शमात्रेण वह्निरूपां वमेच्छिखाम्।
तस्य स्पर्शनमात्रेण पद्मकोषः स्फुटेन्निशि॥ ७९॥
दुर्लभं तन्मनुष्याणां भाग्यैः कुत्रापि लभ्यते।
तद्योजनसहस्रस्य रिष्टं नाशयति ध्रुवम्॥ ८०॥
श्वेतास्तिस्रो यदा रेखा आमूलादुपलक्ष्यते।
श्वेताङ्गमिति तद्विद्याद्यशोलक्ष्मीबल-प्रदम्॥ ८१॥
अम्भोजदलसङ्काशं अङ्गं भूमिः सितेतरा।
अम्भोज वज्रं तज्ज्ञेयं कथितं मुनिपुङ्गवैः॥ ८२॥
अङ्गं यस्य गदाकारं भूमिश्चैव सितेतरा।
गदावज्रमिदं ब्रूयात् तत्स्वते शूल-सम्भवः॥ ८३॥
अङ्गं कृष्ण-तिलाकारं भूमिश्चैव सिताऽसिता।
तिलवज्रमिदं ज्ञेयं लक्ष्मीबलयशःप्रदम्॥ ८४॥
तत्स्वते तिलतैलाभा वसा प्रस्रवतेऽधिकम्॥ ८५॥

---

(१) कट्टुकं इति (क) पुस्तक पाठः।

धूम्रवर्णा भवेद्भूमि रक्तं वह्नि-शिखोपमम् ।
अग्निवज्रमिदं ज्ञेयं शत्रूणां दाहकारकम् ॥ ८६ ॥
अत्र शीतोदकं न्यस्तं तप्तं भवति च क्षणात् ।
शाणे वह्निं वमेद् यस्तु तथा सूर्य्यांशु-सङ्गमात् ॥ ८७ ॥
तत्क्षते वलवान् दाहो दग्धवच्च व्रणो भवेत् ।
एतत्परम-भाग्येन लभ्यते धरणी-तले ॥ ८८ ॥
भूमिः सिता तिला वापि अङ्कश्चेत् पिप्पली-प्रभम् ।
कणावज्रमिदं ज्ञेयमन्तर्दाहस्तु तत्क्षते ॥ ८९ ॥
कृष्णाभूमिर्यदैवाङ्के दृश्यते ग्रन्थिसञ्चयः ।
ग्रन्थिवज्रमिदं ज्ञेयं वैरिपक्ष-विनाशनम् ॥ ९० ॥
तत्क्षते वलवान् दाहस्तृषा च ज्वर एव च ।
शालपर्णीदलाकारमङ्कं कृष्णासि-पुत्रिका ॥ ९१ ॥
स्थिरा वज्रमिदं प्राहुस्तत्क्षते वेपथुर्भवेत् ।
यदा तित्तिरिपक्षाभमङ्कं भूमिः सितेतरा ॥ ९२ ॥
एतत् तित्तिरिवज्रं स्यात् तत्क्षते वहुधेनवः ।
वनमाला-समा यस्मिन् माला खड्गे प्रदृश्यते ॥ ९३ ॥
मालाङ्कमिति तद्विद्यात् तत्तोयं गन्धवद्भवेत् ।
अत्र तप्तोदकं न्यस्तं शीतं भवति तत्क्षणात् ॥ ९४ ॥
एष दाह-परीतानामृते पित्तहतात्मनाम् ।
भवेत् परमभैषज्यं भाग्येनैतद्धि लभ्यते ॥ ९५ ॥
यदा जीरकसङ्काशमङ्कं भूमिः सितासिता ।
एतज्जीरकवज्रं स्यात् तत्क्षते तत्क्षणाज्ज्वरः ॥ ९६ ॥
भूमिः सितासितश्चेत्वा अङ्कं भृङ्गाभमिष्यते ।
तत्रश्चेन्मध्यमं न्यस्तं शेषमाप्नोति केवलम् ॥ ९७ ॥
एतद् भ्रमरवज्रं स्यात् तत्क्षते स्याहिसूचिका ।

ऊर्द्ध्वगं कपिलाभासमङ्कं यस्मिन् प्रतीयते ।
ऊर्द्ध्ववज्रमिदं प्राहुर्विषवेगनिसूदनम् ॥ ९८ ॥
लौहप्रदीपेऽपि,—
ऊर्द्ध्वगं कपिलाभासमङ्कं यस्मिन् प्रतीयते ।
लाङ्गलाङ्कन्तु तद्विद्यात् स्पर्शे तस्याहि नाशनम् ॥ ९९ ॥
अङ्कं मरीचसङ्काशं भवेद्भूमिः सितेतरा ।
मरीचाङ्कमिदं वज्रं तत्क्षते कटुरक्तता ॥ १०० ॥
तत्प्रक्षालन-तोयेन नश्यन्ति पीनसादयः ।
यदा सर्पफणाकारमङ्कं भूमिस्तु निर्म्मला ॥ १ ॥
भुजङ्गवज्रं तद्विद्यात् तत्क्षते विषवद्रुजा ।
तस्य स्पर्शनमात्रेण भेकः प्राणैर्विमुच्यते ॥ २ ॥
एकस्यास्य प्रसादेन कृत्स्नां शास्ति महीं नृपः ।
यदाश्वखुरसङ्काशं अङ्कं भूमिस्तु निर्म्मला ॥ ३ ॥
अश्वाङ्कमिति तं विद्यात् खड्गं परमदुर्लभम् ।
तस्य संयोगमात्रेण वाजी मन्दोऽपि धावति ॥ ४ ॥
तस्य क्षालन तोयेन हयानां रोग-नाशनम् ।
एतत्क्षते भृशं मूर्च्छा दाहश्च भ्रम (२) एव च ॥ ५ ॥
मयूरपिच्छसदृशं अङ्कं भूमिः सितेतरा ।
बर्हाङ्कमिति तं विद्यात् तत्क्षते वान्तिरिष्यते ॥ ६ ॥
सर्पाणामिह सर्व्वेषामस्य स्पर्शा सहिष्णुता ।
एतदेव नृपतिभिर्भाग्यैः कुत्रापि लभ्यते ॥ ७ ॥
भूमिरञ्जनसंकाशा धारा चास्य सिता भवेत् ।
अञ्जनाख्यमिदं प्रायः सर्व्वदैवोपलभ्यते ॥ ८ ॥

---

(२) द्रुम इति (क) पुस्तक पाठः ।

लौहप्रदीपेऽपि,—

धारा शुभ्रा भवेद् यस्य भूमिः कज्जलसन्निभा।
कृष्णरङ्गैश्चितं वापि विद्यात् कज्जलवज्रकम् ॥ ९ ॥
मधुवर्णसमाभूमिरङ्गं वा मधुविन्दुवत्।
क्षौद्राख्यमिति (३) जानीयात् जयलक्ष्मीयशःप्रदम् ॥ १० ॥

शार्ङ्गधरेऽपि,—

निम्नकायो भवेत् यत्र रात्रिन्दिव विलेपितः।
मधुरो मधुवर्णाभः स खड्गो देववल्लभः ॥ ११ ॥
विशेषाद्यत्र रज्यन्ति सततं मक्षिकादयः।
आसीम कोणिका यस्य क्षुद्राङ्गं कुण्डलीकृतम् ॥ १२ ॥
क्षुद्रवज्रकनामानं प्राह नागार्जुनो मुनिः।
इदं कुण्डलवज्रञ्च प्राह लौहार्णवे मुनिः ॥ १३ ॥
अस्य क्षतेषु वलवान्दाहो मम विलोकितः।
यदङ्गं मक्षिकाकारं भूमिश्चैव सितासिता ॥ १४ ॥
स्नेहः शुष्यति चैवात्र मक्षिकाङ्गं तमादिशेत्।
अङ्गं यदा तुषाकारं या च भूमिः सितासिता ॥ १५ ॥
तुषवज्रमिदं ख्यातं प्राह नागार्जुनो मुनिः।
अङ्गं यवफलाकारं भूमिः कृष्णा सिता तथा ॥ १६ ॥
यवाङ्गमिति तं विद्यात् तत्स्पर्शे कण्डु-सम्भवः।
एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः (४) ॥ १७ ॥
अङ्गं व्रीहिप्रसूनाभं भूमिर्धूम्रा क्षतेऽतिरुक्।
तद्व्रीहि वज्रं जानीयाच्छत्रूणां भयवर्द्धनम् ॥ १८ ॥

---

(३) क्षौद्राममिति (क) पुस्तक पाठः।
(४) भूमिरात्मनः इति (ख) पुस्तक पाठः।

अतसीफलसङ्काशमङ्कं भूमिः सितासिता।
अतसीवच्चमाहुस्तं तत्क्षते शिरसो रुजा ॥ १९ ॥
यदा सर्षपबीजाभमङ्कं भूमिः सितासिता।
खरधारः खरस्पर्शः सर्षपाङ्कः स दुर्लभः ॥ २० ॥
सिंह्याकारं भवेद्यस्य अङ्कं भूमिः सितासिता।
सिंहीवच्चन्तु तद्विद्यात् तत्क्षते प्रलपेन्नरः ॥ २१ ॥
एतद्धावन-तोयेन कासरोगोप-नाशनम्।
अङ्कं तण्डुलसङ्काशं भूमिर्धूम्रा सितासिता ॥ २२ ॥
तण्डुलाङ्कमिमं विद्याद् यशः श्रीबलवर्द्धनम्।
एतत् पर्य्युषितं तोयं तण्डुलोदक-सन्निभम् ॥ २३ ॥
अस्य प्रभावान्मनुजो भ्रष्टां हि लभते श्रियम्।
अङ्कश्चेद् गोक्षुराकारं भूमिराघात-निःसहा ॥ २४ ॥
खड्गाधममिदं विद्याद्गोवच्चं नाम नामतः।
स्थूला दीर्घाः शिराः कृष्णा भूमिश्चैव सितासिता ॥ २५ ॥
शिराङ्कमिति तं ब्रूयात् एनं खड्गाधमं बुधाः।
शिवलिङ्गाकृतिश्चाङ्के धारा चैव सिताथवा ॥ २६ ॥
शिराङ्कमिति तं ब्रूयाच्छत्रुपक्ष-निसूदनम्।
यदा व्याघ्रनखाकारमङ्कं भूमिस्तु पिङ्गला ॥ २७ ॥
नखवच्चमिदं ब्रूयात् तत्क्षते श्वयथुर्भवेत्।
एतदामिषसंस्पर्शात् प्रविशेत् स्वयमेव हि ॥ २८ ॥
शाल्पुष्पोपमन्त्वङ्कं भूमिर्धूम्रा खराकृतिः।
शाल्वाङ्कमिति जानीयाच्छक्रवंशोपमाशनम् ॥ २९ ॥
अस्य स्पर्शनमात्रेण जीवमात्या जहत्यसून्।
यदा मनुजनेत्राभमङ्कं भूमिः सितासिता ॥ ३० ॥
नेत्राङ्कमिति जानीयात् संग्रामे विजयप्रदम्।

एतद्वावनतोयेन नूनमन्धोऽपि पश्यति ॥ ३१ ॥
अङ्गं केशसमं यस्य भूमिर्धूम्रा सितासिता ।
केशाङ्गमिति जानीयात् क्लेशदुःखभयापहम् ॥ ३२ ॥
निरङ्गं स्थूलप्रज्ञातिमुपलाङ्गं विदुर्बुधाः ।
एतद्धि प्रायशो लोके दृश्यते द्विजसत्तम ॥ ३३ ॥
पद्मपुराणस्य,—
निरङ्गा निशिता धारा शाणे वह्निं वमत्यपि ।
द्रोणीवज्रमिदं श्रेयं पृथिव्यां नातिदुर्लभम् ॥ ३४ ॥
अङ्गं काकपदाकारं भूमिराघात निःसहा (५) ।
एष खड्गाधमस्त्याज्यो काकाङ्गो भूतिमिच्छता ॥ ३५ ॥
यदा कपालमङ्गेषु दृश्यते स्पर्शतः खरम् ।
एतद्धि दुःखजनकं कपालाङ्गं बुधस्त्यजेत् ॥ ३६ ॥
तन्वीपत्रा वलाङ्का या सुवर्णाङ्गासिपुत्रिका ।
पत्रवज्रकमाहुस्तं आयुर्वेदविदो जनाः ॥ ३७ ॥
लौहार्णवेऽपि,—
सुप(व)र्णसन्निभा भूमिरङ्गं कालं प्रतीयते ।
तत्पत्रवज्रं काकस्य सुप(व)र्णमुपजायते ॥ ॥ ३८ ॥
तुवरीदलसङ्काशं अङ्गं यस्मिन् प्रतीयते ।
तुवरीवज्रमाहुस्तं तत्क्षते शिरसो भ्रमः ॥ ३९ ॥
एष खड्गाधमस्त्याज्यो यदीच्छेज्जीवनं निजम् ।
बिम्बीदलसमा भूमिरङ्गं बिम्बीफलोपमम् ॥ ४० ॥
बिम्बीवज्रन्तु तद्विद्यात् तज्जलं तिक्तमुच्यते ।
पित्तश्लेष्मविकाराणां प्रशमाय प्रयुज्यते ॥ ४१ ॥

---

(५) निश्चया इति (ग) पुस्तके पाठः ।

प्रियङ्गु सदृशस्त्वङ्गं भूमिश्च कपिलाकृतिः ।
फलवज्रमिदं प्रोक्तं घ्राणे धूमं वमत्यपि ॥ ४२ ॥
अङ्गं सर्षपपुष्पाभं भूमिश्चैव सितासिता ।
एतत् सर्षपवज्रं स्याच्छ्राणे वह्निं वमत्यपि ॥ ४३ ॥
अपि कुण्डलिकां याति एतदत्यन्तकोमलम् ।
एतत् प्रसादात् क्षितिपः कृत्स्नां साधयते महीम् ॥ ४४ ॥
नीलीरससमा भूमिरङ्गं नीलीतरङ्गवत् ।
नीलीवज्रमिदं दृष्टं घ्राणे वह्निशिखां वमेत् ॥ ४५ ॥
एष खड्गवरो नृणामरिष्टभयनाशनः ।
रक्तास्तिस्रो महारेखा भूमिश्चैव सितासिता ॥ ४६ ॥
रक्ताङ्गमिति जानीयात् वैरिपक्ष-विनाशनम् ।
घ्राणेन यस्तु रक्तां वा नीलां वा वमते शिखाम् ॥ ४७ ॥
रक्तस्पर्शनमात्रेण स्वयमेव निकृन्तति ।
क्षतेऽस्य रक्तश्वयथुस्तृषा दाहश्च जायते ॥ ४८ ॥
अङ्गं वचादलसमं भूमिश्चैव सितासिता ।
वचावज्रमिदं श्रेयं तत्क्षताद्विषनाशनम् ॥ ४९ ॥
एष खड्गवरो राज्ञा साधनीयः प्रयत्नतः ।
रसोनादुत्तमं ह्यङ्गं भूमिस्तस्य दलोपमा ॥ ५० ॥
रसोनवज्रं जानीयात् घ्राणे वह्निं वमत्यपि ।
अस्य धाव(र)नतोयेन आमवातविनाशनम् ॥ ५१ ॥
निरङ्गा निर्म्मला भूमिर्धारा तीक्ष्णा खरः स्वयम् ।
सुमनावज्रमेतत्स्याद्भुवि नात्यन्तदुर्लभम् ॥ ५२ ॥
मञ्जिष्ठा सदृशा दीर्घास्तन्वग्रो रेखाः सुविस्तराः ।
जिह्वावज्रमिदं नाम सर्व्वकामार्थ-साधनम् ॥ ५३ ॥
अङ्गं शमीपत्रसमं भूमिर्धूम्रा सितासिता ।

शमीवज्रमिदं ज्ञेयं शनैश्चरमुदावहम्।
शाणेषु वमते वह्निं सहते वह्निपीड़नम्॥ ५४॥
रोहितवस्त्रल सदृशमङ्गं भूमिः सितासिता वापि।
धूम्रागम्भीर स्वरयुक्तं धारा तीक्ष्णा सिता भवेद्रेखा॥५५॥
रोहिताख्यमिदं वज्रं सर्व्वारिष्टविनाशनम्।
वह्निसंस्पर्शमात्रेण किञ्चिञ्चिमिचिमायते॥ ५६॥
इत्ययं दुर्लभः खड्गो देवानामपि कथ्यते।
शफ(१)रीवल्कलाकारमङ्गं भूमिः सितासिता॥ ५७॥
प्रोष्ठीवज्रमिदं प्रोक्तं न्यस्तं तरति वारिणि।
एष खड्गोत्तमो राज्ञां विपक्षकुलनाशकः॥ ५८॥
कदाचिल्लभ्यते भाग्यैर्लभ्यते लभ्यते महो।
अङ्गं मारिषपत्राभं भूमिः स्याद्विषमच्छविः॥ ५९॥
इत्ययं मारिषाङ्गः स्यात् पृथिव्यां नातिदुर्लभः।
भृङ्गराजस्य पुष्पाभमङ्गं भूमिर्दलप्रभा॥ ६०॥
आघातं सहते नैव एष खड्गाधमो मतः।
धारा तीक्ष्णा खुराकारा भूमिरङ्गविवर्जिता॥ ६१॥
आघातं सहते घोरं शाणे वह्निं वमत्यपि।
खुराङ्गमिति जानीयात् पृथिव्यां नातिदुर्लभम्॥ ६२॥
निर्म्मला समला भूमिर्भवेच्चैव कदाकदा।
मन्दा तीव्रा भवेद्धारा तडिद्वज्रस्य लक्षणम्॥ ६३॥
नीलाञ्जनसमा भूमिरङ्गं जलतरङ्गवत्।
मेघाङ्गमिति जानीयाच्छाणे शीतं भवत्यपि॥ ६४॥
एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः।
भर्त्तुः प्रतापं शमयेद्रविबिम्बं यथा घनः॥ ६५॥

(१) शकरी इति (क) पुस्तक पाठः।

मन्दा धारा भृशं गाढ़ा भूमिरङ्गविवर्ज्जिता ।
पर्व्वताङ्गमिदं नाम सर्व्वत्रैवोपलभ्यते ॥ ६६ ॥
अङ्गं गुञ्जाफलसमं भूमिर्म्मीनदलोपमा ।
गुञ्जावज्रमिदं पृष्ठं तप्तं भवति घर्षणे ॥ ६७ ॥
घ्राणे सिन्दूरसङ्काशं रजो वमति चासकृत् ।
एष खड्गवरो राज्ञा भाग्यादेवोपयुज्यते ॥ ६८ ॥
अस्य प्रभावात् तन्नास्ति यन्न साधयते नृपः ।
अङ्गं तनुशराकारं भूमिश्चैव सितासिता ॥ ६९ ॥
धारा तीक्ष्णा वमति च घ्राणे वह्निसमाः शिखाः ।
शरवज्रमिदं ज्ञेयं राज्ञां वाञ्छितसिद्धये ॥ ७० ॥
दूर्व्वादलनिभा भूमिर्धारा तीक्ष्णा खरः स्वरः ।
घ्राणेन वमते वह्निं दूर्व्वावज्रं सुदुर्लभम् ॥ ७१ ॥
अङ्गं विल्वदलाकारं भूमिश्चैव सितासिता ।
विल्ववज्रमिदं घ्राणे नीलपीते वमेच्छिखे ।
एष खड्गवरः प्रोक्तः शत्रूणां कुलनाशनः ॥ ७२ ॥
मसूरदल-सङ्काशा भूमिरङ्गं मसूरवत् ।
मसूराङ्गमिदं घ्राणे रजो (१) वमति चारुणम् ॥ ७३ ॥
शोण(२)पुष्पनिभा रेखा दीर्घा भूमिः सितेतरा ।
शोणाङ्गमिति जानीयात् खड्गं परमदुर्लभम् ॥ ७४ ॥
शठीदलसमा भूमिरङ्गं तत्कुसुमोपमम् ।
शठीवज्रमिदं प्रायो लभ्यते गुणवत्तरम् ॥ ७५ ॥

---

(१) वह्नी इति (क) पुस्तक पाठः ।
(२) शण इति (ख) पुस्तक पाठः ।

मार्ज्जाररोम-सदृशमङ्गं भूमिः सितेतरा ।
मार्ज्जाराङ्गमिदं नाम्ना रोगशोक भयावहम् (३) । ७६ ॥
एष खड्गाधमस्त्याज्यो यदीच्छेद्भूतिमात्मनः ॥ ७७ ॥
केतकीपत्रसदृशमङ्गं यस्मिन् प्रतीयते ।
विद्यात् केतकवज्रं तद् वाराणसी(स) समुद्भवम् ॥ ७८ ॥
लौहप्रदीपस्य,—
अङ्गं मूर्व्वातन्तुनिभं भूमिर्मूर्व्वादलच्छविः ।
घ्राणेन वमते शुक्लां शिखां मौर्व्वी भवेत् ततः ॥
मौर्व्वाङ्गमिदमुत्कृष्टं यशः कीर्त्तिवलावहम् ॥ ७९ ॥
लिङ्गं तीक्ष्णं (४) खरं गाढ़ं घ्राणे वह्निर्वमेत्कणम् ।
छिनत्त्यन्यविधं लौहं वज्राङ्गमिति तद्वदेत् ॥ ८० ॥
कलायपुष्पसदृश मङ्गं भूमिः सितासिता ।
कलायवज्रं जानीयात् तत्क्षते पाक इष्यते ॥ ८१ ॥
अङ्गं चम्पकपुष्पाभं भूमिः कृष्णा तथासिता ।
शिखां घ्राणे वमेच्छीतं तिक्तं तस्य जलं भवेत् ।
इदं चम्पकवज्रं स्यात् सर्व्वत्र विजयप्रदम् ॥ ८२ ॥
अङ्गं वलादलसमं भूमिः शुक्ला तथेतरा ।
वलावज्रमिदं ज्ञेयं नानाभावं भवेद् द्रुतम् ।
इत्ययं वातरोगाणां नाशने परमौषधम् ॥ ८३ ॥
अङ्गं वटारोहसमं भूमिर्वटदलच्छविः ।
वटवज्रमिदं ज्ञेयं खरं खड्गाधमं वुधैः ॥
एतस्य स्पर्शमात्रेण नरो मुच्यते सम्पदा (५) ॥ ८४ ॥

---

(३) भयापहम् इति (ग) पुस्तक पाठः ।

(४) लिङ्गमतितीक्ष्णं इति (ख) पुस्तकः पाठः ।

(५) शङ्कटात् इति (ग) पुस्तक पाठः ।

वंश नीलीसमा भूमिः खरधारा सिताकृतिः ।
वंशाङ्गमिति जानीयाद्वंशवृद्धिकरः परः ॥ ८५ ॥
भूमिः शालदलाकारा अङ्गं लघु सितासितम् ।
शालाङ्ग एष खड्गः स्यात् पूज्यः सर्व्वार्थदायकः ।
अयं शाणे वमेद्वह्निं धारा चाप्यथवा भवेत् ॥ ८६ ॥
भूमिः सितासिता वापि अङ्गं ज्येष्ठीसमं लघु ।
ज्येष्ठीवज्रमिदं निन्द्यं न स्पृश्यं वा हितेच्छुभिः (६) ॥८७॥
पुराणजालसदृशमङ्गं भूमिः सितासिता ।
जालवज्रमिदं पूज्यं शत्रुसम्पत्तिनाशनम् ॥ ८८ ॥
यदि शाणे वमेन्नीलां शिखां वह्निं वमेच्च वा ।
तदैष दुर्लभः खड्गो नान्यथा भयहेतुकः ॥ ८९ ॥
अङ्गं पिपीलिकाकारं भूमिर्धूम्रा तथासिता ।
पिपीलिकाङ्ग इत्येष तत्‌च्चते कण्डु-सम्भवः ।
स्वयं यदि भवेद् धन्नः शाणे पूज्यतमस्तदा ॥ ९० ॥
नलपत्रसमाभूमिरङ्गं (७) तत्कुसुमोपमम् ।
नलङ्गामिति जानीयाद् भर्त्तुः सर्व्वार्थसाधकः ॥ ९१ ॥
निरङ्गानिर्म्मला भूमिर्घृष्टं घृष्टं वमेद्रजः ।
दृढ़ा धारा भृशस्थूला आघातं सहते न च ।
रजोवज्रमिदं निन्द्यं शत्रूणां विजयावहम् ॥ ९२ ॥
कुष्माण्डवीजसदृशमङ्गं भूमिः सितासिता ।
कुष्माण्डवज्रं जानीयात् तत्‌च्चते वेगनिग्रहः ॥ ९३ ॥
अङ्गं नृरोम-सदृशं भूमिर्धूम्रा सितासिता ।
रोमाङ्गमिति जानीयात् तत्‌च्चते पिड़कोद्ग(प)मः ॥ ९४ ॥

---

(६) या हिताच्छुभिः इति (क) पुस्तक पाठः ।
(७) भूमिरेकोङ्गः इति (ख) पुस्तक पाठः ।

भूमिः स्नुही(८)दलसमा अङ्गं तत्कण्टकोपमम् ।
धारा तीक्ष्णा रव(वर)स्तीक्ष्णो लघुमानं खरस्पृशा ॥ ९५ ॥
सुधाङ्गः खड्ग इत्येष तत्क्षते दाहवद्भ्रमाः ।
मुखाक्षि कर्णनासानां दाहः पाकश्च जायते ॥ ९६ ॥
अयं यदि च सर्पाणां फणासूपरिविश्यते ।
फणाविदारमाप्नोति सर्पो लोटयते शिरः ।
अस्य धावन तोयेन कुष्ठरोगविनाशनम् ॥ ९७ ॥
कर्कन्धुदलपृष्ठाभा भूमिरङ्गन्तु तत्समम् ।
कर्कन्धुवज्ञं जानीयात् तत्क्षते दाहनाशनम् ॥ ९८ ॥
एष खड्गाधमस्त्याज्यो जेतव्या यदिविद्विषः ।
अङ्गं वकुलपुष्पाभं भूमिस्तत्फलसन्निभा ॥ ९९ ॥
वकुलाङ्गमिदं पूज्यं घ्राणे सुरभिगन्धवत् ।
तन्नास्ति जगतीमध्ये यदनेन न साध्यते ॥ १०० ॥
अङ्गं सन्मिश्रितं यस्मिन्न किञ्चिद्वाक्तमोच्यते (९) ।
सर्व्वेषां दर्शनं वापि तीक्ष्णधारः(रा) खरस्वरः ॥ १ ॥
एष काञ्जिकवज्रः स्याद्यत्नादेवोपलभ्यते ।
नैनं प्राप्यापि वर्द्धन्ते शेषाश्छिन्नादयोऽपि च ॥ २ ॥
भूमिः कृष्णा निरङ्गा चेद्धारा तीक्ष्णा दृढ़ापि च ।
आघातं सहते घोरं रक्तं स्पर्शेन यो विशेत् ॥ ३ ॥
घ्राणेन वह्निं वमति ध्रुवं वाप्यति घर्षणात् ।
महिषाङ्गः स वै खड्गः पृथिव्यां नाति दुर्लभः ॥ ४ ॥

---

(८) स्थूला इति (क) पुस्तक पाठः ।
(९) मिद्यते इति (ख) पुस्तक पाठः ।

अत्यन्त निर्म्मलाभूमिः शरीरं प्रतिविम्बितम्।
धारा तीक्ष्णा खरस्तीक्ष्णः (१०) स्वच्छाङ्गं तद्विनिर्द्दिशेत् ॥५॥
तस्मिन् यदा भवेद्रेखा ऊर्द्ध्वा ऋत्वाख्यकं (११) तदा।
अस्मिन्नपि भवेद्वक्रारेखा वक्राभिधन्तु तत् ॥ ६ ॥
एतत् त्रितयमुद्दिष्टं खड्गानां प्रवरं बुधैः।
प्रायशो लभ्यते लोके यदि सर्व्वगुणावहम् ॥ ७ ॥
इतीदं निखिलं प्रोक्तं वज्राणां लक्षणं मया।
प्रयत्नैर्लिखितं व्यक्तं सर्व्वेषां हितकाम्यया ॥ ८ ॥
इतः परन्तु लौहानां लक्षणं यत्र लक्ष्यते।
तस्य दासो भवाम्येव प्रतिज्ञेति कृता मया ॥ ९ ॥
द्विलिङ्गमिश्रमालोक्य मिश्राङ्गमिति निर्द्दिशेत्।
सर्व्वेषामङ्गमालोक्य सर्व्वाङ्गमिति निर्द्दिशेत् ॥ १० ॥

इति खड्गपरीक्षायामङ्गाध्यायो द्वितीयः।

खड्गस्य रूपाणि यथा—

नीलीकलाय-कुसुमच्छविरट(१२)ञ्जनाभा,
या चन्द्रनील मणि-काच मणि-प्रभाच।
भूमिश्च या मरकत-प्रतिमावभासा ;
खड्गस्य नीलमिति रूपमिदं वदन्ति ॥ ११ ॥
तत्र चेन्निन्दितान्यङ्गान्यरिष्टानि वहून्यपि।
दृश्यन्ते वहुदोषापि तथापि गुणवत्तरम् ॥ १२ ॥

---

(१०) स्रवन्तीक्ष्णः इति (क) पुस्तक पाठः।
(११) वक्रं यथा इति (ख) पुस्तक पाठः।
(१२) गुञ्ज इति (ग) पुस्तक पाठः।

या कालकाम्बुदमसौरसकालसर्प-
शङ्काम्बकारकचभार समा विभाति ।
भूमिश्च या भ्रमरवन्धुसमावभासा ;
खड्गस्य कृष्णमिति रूपमिदं वदन्ति ॥ १३ ॥
अत्र नेत्राणि सम्पत्त्यै अरिष्टान्य शुभानि च ।
साधारणमिदं रूपं प्राह नागार्ज्जुनो मुनिः ॥ १४ ॥
या प्राहृषेण्य-नवभेकसमानवर्णा,
गोमेदरत्नसदृशापि च यस्य भूमिः ।
खड्गस्य पिङ्गमिति रूपमिदं वदन्ति ;
भर्त्तुर्यशोवलधनचय-कारणाय ॥ १५ ॥
या मन्दधूमसदृशा च शिरीष पुष्प,
तुल्या विभाति मलिनापि च खड्ग भूमिः ।
नागार्ज्जुनो वदति धूम्रमिदं हि रूपं ;
भर्त्तुर्यशोवलधनावलि-वर्द्धनाय ॥ १६ ॥
द्विरूपं मिश्रितं कृत्वा श(स)ङ्करं प्रवदेद्बुधः ।
त्रिभीरूपैः समेतन्तु खड्गं त्रिपुर-संज्ञितम् (१३) ।
रूपैश्चतुर्भिः संयुक्तं चतुरं खड्ग मुत्तरम् ॥ १७ ॥

इति लौहार्णवस्य खड्ग परीक्षायां वर्णाध्यायस्तृतीयः ।

जातिश्चतुर्विधा प्रोक्ता खड्गानां या पुरा मया ।
सम्प्रत्यपि प्रयत्नेन तासां लक्षणमुच्यते ॥ १८ ॥
शुद्धाङ्गः शुद्धवर्णश्च सुनेत्रः सुस्वरश्च यः (१४) ।
मृदुस्पर्शः सुसन्धेयस्तीक्ष्णधारो महागुणः ॥ १९ ॥

---

(१३) सञ्ज्ञितं इति (क) पुस्तक पाठः ।
(१४) सुसुखश्च यत् इति (ख) पुस्तक पाठः ।

खड्गं ब्राह्मणजातिं तं प्राह नागार्जुनो मुनिः ।
अस्य क्षते भवेच्छोथो घोरः सर्व्वाङ्गगोचरः ॥ २० ॥
मूर्च्छा पिपासा दाहश्च ज्वरो मृत्युश्च जायते ।
अघृष्टं त्रिफलाकल्कमर्द्दरात्रिन्दिवोषितम् ॥ २१ ॥
मलिनत्वं न सन्धत्ते निर्म्मलं कुरुते परम् ।
तरुणादित्यकिरण-स्पर्शादेव तृणे स्थितः ॥ २२ ॥
दहेत् सर्व्वं न तु करं पुरुषस्य हि धारिणः ।
गायत्र्यच्चारमात्रेण खरतां व्रजति स्फुटम् ॥ २३ ॥
एष खड्गवरः सर्व्वमरिष्टं नाशयेद्ध्रुवम् ।
अस्य प्रसादात् पुरुष स्त्रिलोकमपि साधयेत् ॥ २४ ॥
तस्मादेव मनुष्याणां सुलभो नहि भूतले ।
दृश्यन्ते प्रायशः स्वर्गे (१५) कुशद्वीपे हिमालये ॥ २५ ॥

ब्राह्मणजातिः ।

धूम्रवर्णं महासारं तीक्ष्णधारं खरस्वरम् ।
सर्व्वाघातसहं सर्व्वनेत्रवर्णस्वराकरम् ॥ २६ ॥
खड्गं क्षत्रियजातिं तं जानीयात् खड्गकोविदः ।
अस्य क्षते भवेद्दाहस्तृषानाहो ज्वरो भ्रमः ॥ २७ ॥
मृत्युश्च जायते घ्राणे वमेदग्निकणान् वहून् ।
संस्कारे चाप्यसंस्कारे नैर्म्मल्यं तस्य लक्ष्यते ॥ २८ ॥
घ्राणेऽप्यघ्राणे खरतामूर्द्धि (१६) चात्यन्ततीक्ष्णता ।
रक्तस्पर्शनमात्रेण विशेदन्तरमन्तरम् ॥ २९ ॥
अयं खड्गवरः पूज्यो मनुष्यैरपि लभ्यते ॥ ३० ॥

---

(१५) सुमेरौ इति (क) पुस्तक पाठः ।
(१६) युद्धे इति (ख) पुस्तक पाठः ।

नीलवर्णः कृष्णवर्णः संस्कारे निर्म्मलो भवेत्।
घ्राणेन खरता चास्य घाततुल्यं निकृन्तति ॥ ३१ ॥
वैश्यजातिरयं खड्गः क्षते त्वङ्मात्रदर्शनम् (१७)।
नात्युत्कृष्टो नातिहीनः सर्व्वत्रैवोपलभ्यते ॥ ३२ ॥
सजलाम्भोदसङ्काशः स्थूलधारो मृदुस्वरः।
संस्कारे चैव मलिनः घ्राणे चापि खरेतरः ॥ ३३ ॥
शूद्रजातिरयं खड्गः क्षते नाल्पापि वेदना।
दूरादेषो(१८)ऽधमस्त्याज्यो यदीच्छेद्धितमात्मनः ॥ ३४ ॥
प्रायशः सर्वलोकेषु स्वयमेवोपदृश्यते।
द्वयोर्लक्षणमालोक्य जारजं खड्गमादिशेत् ॥ ३५ ॥
त्रयाणां लक्षणेनैव त्रिजातिं खड्ग(१९)मादिशेत्।
चतुर्णां लक्षणेनैव जाति-सङ्करमुच्यते ॥ ॥ ३६ ॥
इति लौहार्णवस्य खड्गपरीक्षायां जात्यध्यायः।

अथ त्रिंशन्नेत्राणां लक्षणानि ॥

अङ्गं स्यात् सर्व्वतो वापि नेत्रमेकत्रसंस्थितम् *।
अतः परन्तु नेत्राणां लक्षणं संप्रवक्ष्यते ॥ ३७ ॥
नेत्रेणैकेन हस्तेन निन्दितोपि प्रशस्यते।
तथा जाति विहीनोपि गुणवान् पूज्यते नरः ॥ ३८ ॥
खड्गः सदङ्गो न च नेत्र हीनो न पूज्यते नाम्बुकरः स एवः।
यथा मनुष्यः खलु सुन्दराङ्गोनकर्म्मयोग्यो भुवि नेत्रहीनः ॥ ३९ ॥

---

(१७) क्षतेवं नात्रदर्शनं इति (क) पुस्तक पाठः।
(१८) देशो इति (ख) पुस्तक पाठः।
(१९) शङ्ख इति (ग) पुस्तक पाठः।

---

* अङ्गमित्यारभ्य भुविनेत्रहीन इत्यन्तं श्लोकद्वयं (ख) पुस्तके अधिकं पठ्यते।

चक्रपद्मे गदा शङ्खौ भयवर्द्धनवाङ्कुशः ।
छत्रं पताका वीणा च मत्स्यन्तु शिवलिङ्गकः ॥ ४० ॥
ध्वजार्द्धचन्द्रकलसा शूलं शार्द्दूल नेत्रकम् ।
सिंहः सिंहासनञ्चैव गजहंसमयूरकाः ॥ ४१ ॥
जिह्वा दन्ताश्च खड्गश्च मनुष्यश्चामरस्तथा ।
शैलश्चैव तथा पुष्प माला सर्षप एव च ॥ ४२ ॥
चक्राकारं यदा नेत्रं खड्गस्याङ्गे प्रदृश्यते ।
तं चक्रनेत्रं जानीयात् भर्त्तुः सर्व्वार्थसाधनम् ॥ ४३ ॥
अनेनैकेन खड्गेन कृत्स्नां साधयते महीम् ।
प्रफुल्लपद्मसङ्काशं नेत्रं पद्मदलोपमम् ॥ ४४ ॥
यदि वा दृश्यते खड्गे पद्मनेत्रं समादिशेत् ।
अयं खड्गवरो यत्र तत्रैव कमलालया ॥ ४५ ॥
ऊर्द्ध्वा स्थूला यदा रेखा गदाकारा प्रतीयते ।
गदानेत्रमिदं विद्धि सर्व्वशत्रुनिसूदनम् ॥ ४६ ॥
शङ्खाकारं यदा नेत्रं खड्गमध्येऽभि(१)दृश्यते ।
शङ्खनेत्रमिदं सर्व्वं देवानामपि दुर्लभम् ॥ ४७ ॥
डमरुप्रतिमं नेत्रं यस्य भूमौ प्रतीयते ।
सर्व्वार्थ-साधकं खड्गं तं (२) विद्याद्विजयप्रदम् ॥ ४८ ॥
धनुः स्वरूपं यन्नेत्रं धनुर्नेत्रमुशन्तितम् (३) ।
तस्य स्पर्शनमात्रेण मन्दोऽपि प्रमुखायते ॥ ४९ ॥

---

(१) अति दृश्यते इति (क) पुस्तक पाठः ।
(२) तत् इति (ख) पुस्तक पाठः ।
(३) यन्नेयं धनुर्नेत्रमुषन्तितं इति (ग) पुस्तक पाठः ।

अयं निशीथे विजने खड्गो झनझनायते ।
यन्नेत्रमङ्कुशाकारं तं (त्) विद्याद्गुणवत्तरम् ॥ ५० ॥
खड्गमङ्कुशनेत्राख्यं भर्त्तुः सर्व्वार्थसाधक(न)म् ।
अलक्ष्मी-पापरक्षोघ्नं कृत्याग्रह-निवारणम् ॥ ५१ ॥
छत्राकारं यदा नेत्रं छत्रनेत्रं वदन्ति तम् ।
अस्य प्रभावात् क्षीणोऽपि सार्व्वभौमो भवेन्नृपः ॥ ५२ ॥
दीनोऽपि च सुखी भूयात् सुखी भूयान्महेश्वरः ।
महेश्वरोऽपि सचिवः सचिवो मण्डलेश्वरः ।
मण्डलेशश्चक्रवर्त्ती भवेदत्र न संशयः ॥ ५३ ॥
पताकाकृति नेत्रं चेत् सर्व्वसम्पत्ति-कारकम् ।
पताका नेत्रमाहुस्तं संग्राम-विजयप्रदम् ॥ ५४ ॥
नेत्रं वीणाकृति यदा वीणानेत्रमुशन्ति(१)तम् ।
निशीथे विजने खड्गो वीणावत् स्वनमावहेत् (२) ।
अस्य प्रभावात् स(स्व)र्व्वेश्या अपि वश्या भवन्ति हि ॥५५॥
मत्स्याकृति यदा नेत्रं मत्स्यनेत्रमिदं विदुः ।
अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते महीम् ॥ ५६ ॥
शिवलिङ्ग-समं नेत्रं लिङ्गनेत्रमिदं विदुः ।
भर्त्तुः सर्व्वार्थ-संसिद्ध्यै शत्रूणां नाशनाय च ।
वामपार्श्वे तु यात्रायां धर्त्तव्योऽयं तथा रणे (३) ॥ ५७ ॥
(अत्र ध्वजार्द्धचन्द्रकलसानां लक्षणानि पतितानि ।)
शूलाकृति यदा नेत्रं शूलनेत्रं वदन्ति तम् ।
सर्व्वार्थ-साधकः सर्व्वारिष्टानिष्ट-प्रणाशनः ॥ ५८ ॥

---

(१) वदन्ति इति (क) पुस्तक पाठः ।

(२) वन्धनिमावहेत् इति (ख) पुस्तक पाठः ।

(३) व्रणे इति (ग) पुस्तक पाठः ।

शार्दूलनेत्रं तं विद्याच्छार्दूलाकृति-नेत्रतः ।
शत्रुश्रेणी-विनाशाय संग्रामे विजयाय च ॥ ५९ ॥
सिंहाकृति यदा नेत्रं सिंहनेत्रमिमं विदुः ॥
अस्य प्रभावात् क्षीणोऽपि कृत्स्नां साधयते महीम् ॥ ६० ॥
तत् सिंहासननेत्रं स्यान्नेत्रे सिंहासनोपमे ।
अस्य प्रभावात् क्षितिपः कृत्स्नां साधयते महीम् ॥ ६१ ॥
गजाकृति यदा नेत्रं गजनेत्रं वदन्तितम् ।
अस्यप्रभावात् क्षीणोऽपि (१) लभते राजसम्पदम् ॥ ६२ ॥
नेत्रं हंसाकृति यदा हंसनेत्रं वदन्ति तम् ।
अस्य प्रभावात् भूपालो यशः प्राप्नोत्यनुत्तमम् ॥ ६३ ॥
मयूराकृति नेत्रे द्वे तन्नेत्रमिति निर्द्दिशेत् ।
अस्य प्रभावान्मनुजः सर्पदर्पान् (३) निसूदयेत् ॥ ६४ ॥
जिह्वाकारं यदा नेत्रं जिह्वानेत्रं वदन्ति च ।
संग्रामकखर्परेष्ववं पिवेद् वैरिशिरोरजः ॥ ६५ ॥
दन्ताकारं यदा नेत्रं दन्तनेत्रं वदन्तितम् ।
अयं रिपुगणं मूर्द्धि (२) चर्व्वयत्यति भैरवम् ॥ ६६ ॥
खड्गाकारं यदा नेत्रं खड्गनेत्रं वदन्तितम् ।
अस्य प्रभावात् मनुजस्त्रिलोकीं वशयेदपि ॥ ६७ ॥
मनुष्य पुत्रिकाकारा पुत्रिका नेत्रमुच्यते ।
अयं सशैलां सद्वीपां कृत्स्नां साधयते क्षितिम् ॥ ६८ ॥
न चेयं पुत्रिका किन्तु जयलक्ष्मीरिह स्वयम् ।
तस्मान्नायं मनुष्यानामल्पभाग्येन लभ्यते ॥ ६९ ॥

---

(१) क्षितिपः इति (क) पुस्तक पाठः ।
(२) युद्धे इति (ख) पुस्तक पाठः ।
(३) वर्पान् इति (ग) पुस्तक पाठः ।

चामराकृति नेत्रत्वात् तन्नेत्रमिति निर्द्दिशेत्।
अस्य प्रभावात् जायन्ते चामरोद्धृत-सम्पदः॥ ७० ॥
एकानेक(१)शिखे शैलनेत्रे तन्नेत्रसंज्ञकम्।
अपि राष्ट्रभये युद्धे विषमे वैरिसङ्कटे।
स्थिरीकरोति धरणीं धरणीं पर्व्वतो यथा॥ ७१ ॥
पुष्पमाला-समं नेत्रं पुष्पनेत्रं वदन्तितम्।
अस्य प्रभावात् तुष्यन्ति ग्रहाः सर्व्वाश्च देवताः॥ ७२ ॥
भुजङ्गमसमे नेत्रे सर्पनेत्रमिदं मतम्।
अयं शत्रुगणं हन्ति यथा मर्त्त्यं भुजङ्गमः॥ ७३ ॥
सवर्णमसवर्णञ्च तत् सर्व्वं द्विधिधं भवेत्।
सवर्णं शान्तिसम्पत्त्यै रिपुनाशे तथा परम्॥ ७४ ॥
द्वयोरेकत्र पृष्ठे च तत् पुनर्द्विविधं (२) भवेत्।
एकलोकसुखं नेदं ददाति द्विविधं द्वयोः॥ ७५ ॥
मूलमध्याग्रसंस्थानात्तत् पुनर्द्विविधं भवेत्।
अग्रे चाग्रफलं ज्ञेयं मध्ये मध्यफलं मतम्॥ ७६ ॥
मूले फलं जघन्यं स्यात् (३) प्राह नागार्ज्जुनो मुनिः।
एकं द्वे त्रीणि नेत्राणि नात्र संख्याव्यतिक्रमः॥ ७७ ॥
एकं धर्म्मः स्वर्गकामौ द्वे त्रीणि च त्रिवर्गकम्।
तत्फलानि (४) प्रयच्छन्ति प्राह नागार्ज्जुनो मुनिः॥ ७८ ॥

---

(१) एकनेत्र इति (क) पुस्तक पाठः।
(२) विविधं इति (ख) पुस्तक पाठः।
(३) मूले जलं यदन्यं स्यात् इति (ग) पुस्तक पाठः।
(४) जलानि इति (घ) पुस्तक पाठः।

द्वि(त्रि)नेत्रमिति जानीयात् स्वसंज्ञां (१) नेत्रयोर्द्वयो ।
त्रिनेत्रञ्च त्रिभिर्ज्ञेयं बहुनेत्रमतःपरम् ॥ ७८ ॥
यथोत्तरं गुणवन्तं खड्गमाहुरनुत्तमम् ।
दिङ्मात्रमिति (२) निर्दिष्टं नेत्राणां शुभदायिनाम् ।
तीव्राणां मङ्गलानाञ्च दर्शनञ्च शुभावहम् ॥ ८० ॥

इति खड्गपरीक्षायां नेत्राध्यायः पञ्चमः ॥

यथा नेत्रस्य संस्थानं तथारिष्टस्य लक्षयेत् ।
नेत्रेषु स्थाननियमो नारीष्टे स्थान-निर्णयः ।
प्रशस्ताङ्गोऽपि यः खड्गोऽरिष्टेनैकेन निन्दितः ॥ ८१ ॥

अथ त्रिंशदरिष्टानां लक्षणानि ।

छिद्रकाकपदे-रेख भिन्नं भेकञ्च मूषिका ।
विड़ाल शर्करानीला मशको भङ्ग(भृङ्ग)सूचकः ॥ ८२ ॥
विन्दुश्च कालिकादेवी कपोतः काकविग्रहः ।
खर्परः सकलो चाथ क्रीड़ारिष्टं तथाकुलम् ॥ ८३ ॥
जलारिष्टं (३) करालाख्यं कङ्कखर्ज्जूरशृङ्गकम् ।
गोपुच्छारिष्ट-खानित्रे लाङ्गलारिष्टमेव च ॥ ८४ ॥
छिद्रवद् दृश्यते खड्गे स्वभावेन च लक्ष्यते ।
छिद्रारिष्ट(४)मिदं विद्धि भर्त्तुर्वीर्य्यवलापहम् ॥ ८५ ॥
यदा काकपदाकारमरिष्टं दृश्यते क्वचित्
अयं काकपदारिष्टः सर्व्वाभीष्ट-विनाशनः ॥ ८६ ॥

---

(१) संसर्गात् इति (क) पुस्तक पाठः ।
(२) दिङ्नेत्रमिति (ख) पुस्तक पाठः ।
(३) जालारिष्टं इति (न) पुस्तक पाठः ।
(४) रेखारिष्टं इति (घ) पुस्तकपाठः ।

रेखाकारं यदारिष्टमूर्द्धं वा तिर्य्यगेव वा ।
रेखारिष्टमिदं विद्धि भर्त्तुर्वीर्य्यबलापहम् ॥ ८७ ॥
भिन्नभ्रान्तिकरं पापं भिन्नारिष्टमिदं विदुः ।
भर्त्तुः कुलं यशो राष्ट्रं नाहत्वा(ह्वा) न व्रजेत् स्वयम् ॥ ८८ ॥
यदा भेक शिरोरूपमरिष्टं दृश्यते क्वचित् ।
भेकारिष्टमिदं नाम्ना संग्रामे भयदायकम् ॥ ८९ ॥
अरिष्टे मूषिकाकारे मूषिकारिष्टमुच्यते ।
अयं खड्गाधमः कुर्य्यात् पत्युः पातालसङ्गमम् ॥ ९० ॥
विड़ालनयनाकारो विन्दुरेकोऽतिविस्तरः ।
विड़ालारिष्टमेतत् स्यात् भर्त्तुः सर्व्वार्थनाशनम् ॥ ९१ ॥
अरिष्टं शर्कराकारं यदा स्पर्शेन वुध्यते ।
शर्करारिष्टमेतत् स्याद्धनवुद्धि विनाशनम् ॥ ९२ ॥
यदा नीलीरसाभासमरिष्टं दृश्यते क्वचित् ।
नील्यरिष्टमिदं (१) ज्ञेयं यशो लक्ष्मी-विनाशनम् ॥ ९३ ॥
अरिष्टे मशकाकारे मशकारिष्टमुच्यते ।
भर्त्तुः कुलं यशो वुद्धिं धृतिं प्रीतिश्च नाशयेत् ॥ ९४ ॥
भृङ्गमाप्रतिमो विन्दुरेकोऽनेकोऽथवा यदा ।
भृङ्गामारिष्ट इत्येष धृतिस्मृति विनाशनः ॥ ९५ ॥
सूचीरूपमरिष्टं चेदूर्द्धं वा तिर्य्यगेव वा ।
सूच्यरिष्टमिदं नाम भर्त्तुः कुलविनाशनम् ॥ ९६ ॥
त्रयश्चेद्विन्दवो राजन् पङ्क्तायो विषमेण (२) वा ।
उपर्य्युपरि वाधोऽधस्त्रिविन्द्वाख्यमरिष्टकम् ।

---

(१) नीलारिष्टमिदं इति (क) पुस्तक पाठः ।
(२) वैधर्मेन इति (ख) पुस्तक पाठः ।

तस्य स्पर्शनमात्रेण सचेलं स्नानमाचरेत् ॥ ९७ ॥
कालिकारिष्टमित्येतद् धीधृति स्मृति नाशनम् ॥ ९८ ॥
एकत्र यदि न ह्येष प्रयत्नेनापि संवृतः ।
दारो नाम महारिष्टं सर्व्वाभीष्ट-विनाशनम् ।
अनेकगुण-सम्पन्नः खड्गो लोकैर्न गृह्यते ॥ ९९ ॥
कपोतपक्षप्रतिममरिष्टं चेत् तदाह्वयम् ।
भर्त्तुः कुलं यशो विद्यां वलं वुद्धिञ्च नाशयेत् ॥ १०० ॥
काकाकृति यदारिष्ट' काकारिष्टं तदोच्यते ।
अनेन भर्त्तुः संग्रामे भङ्ग एवोपजायते ॥ १ ॥
अरिष्टे खर्पराकारे खर्परारिष्टमुच्यते ।
भर्त्तुर्यशो वलं वीर्य्यं वुद्धिं प्रीतिञ्च नाशयेत् ॥ २ ॥
यदान्यल्लोहशकलं (१) लग्नं स्यादिव लक्ष्यते ।
शकलीति स वै खड्गः सर्व्वाभीष्ट-निसूदनः ॥ ३ ॥
(क्रोड़ीकुशपत्रकयोर्लक्षणे पतिते) ।
यस्मिन् निम्नमिवाभाति मध्ये वा दृश्यते क्वचित् ।
जालारिष्ट(२)मिदं नाम भर्त्तुः कुलधनापहम् ॥ ४ ॥
एकैकरेखा दीर्घाग्रा यदा पल्लविनो भवेत् ।
स्पर्शे वाथ करेणाथ कराला(३)रिष्टमुच्यते ॥ ५ ॥
अयं हि क्षितिपालानां दृष्टियोग्यो भवेन्नहि ।
दर्शनादेव नश्यन्ति यशो लक्ष्मी-जयादयः ॥ ६ ॥

---

(१) सकलं इति (क) पुस्तक पाठः ।
(२) जलारिष्ट इति (ख) पुस्तक पाठः ।
(३) करीलोऽ इति (ग) पुस्तक पाठः ।

अरिष्टे कङ्कपत्राभे कङ्कारिष्टं तदुच्यते ।
अस्य स्पर्शन-मात्रेण नश्यत्यायुर्यशो बलम् ॥ ७ ॥
खर्ज्जूरवृक्ष-प्रतिमं यदारिष्टस्तु लक्ष्यते ।
खर्ज्जूरारिष्टमेतत् स्याद्भर्त्तुः कुलधनापहम् ॥ ८ ॥
गोशृङ्गाभमरिष्टं चेत् शृङ्गारिष्टं तदुच्यते ।
अनेन भर्त्तुर्नश्यन्ति लक्ष्मीबल-कुलादयः ॥ ९ ॥
गोपुच्छाकृति चेत् खड्गे अरिष्टं संप्रतीच्यते ।
पुच्छारिष्टमिदं नाम भर्त्तुः सर्व्वार्थ-नाशनम् ॥ १० ॥
खनित्राभमरिष्टं चेत् खनित्रारिष्टमुच्यते ।
शूराणामपि संग्रामे भङ्गमेतत् प्रयच्छति ॥ ११ ॥
अरिष्टे लाङ्गलाकारे लाङ्गलारिष्टमुच्यते ।
अयं पापात् पापतरः प्रेक्षणीयो न भूभुजा ।
अयमायुः श्रियं हन्ति विद्यां बलमशेषतः ॥ १२ ॥
(बड़िशारिष्टस्य लक्षणं पतितं ।)
इत्यरिष्टानि प्रोक्तानि नानातन्त्रात् प्रयत्नतः ।
विचार्य्यैतानि मतिमान् खड्गं कोशे निधापयेत् ॥ १३ ॥
दिङ्मात्रमिदमुद्दिष्टमरिष्टानां हितात्मनाम् (१) ।
अमङ्गलानां मन्दानां दर्शनस्याशुभावहम् ॥ १४ ॥
अरिष्टमेकमेवस्याद् द्विररिष्टं शुभावहम् ।
अन्यान्यमशुभं हन्याद्विषस्य हि विषं यथा ॥ १५ ॥
एकमारभ्य (२)समान्तमरिष्टं प्राहु नान्यथा ।
यथोत्तरं द्विगुणितं फलमाहुर्मनीषिणः ॥ १६ ॥
इति खड्गपरीयामरिष्टाध्यायः षष्ठः ॥

(१) हतात्मनाम् इति (क) पुस्तक पाठः ।
(२) एकादारभ्य इति (ख) पुस्तक पाठः ।

अथ द्विविधा भूमिः ।

दिव्यभौमविभागेन भूमिर्या द्विविधा मता ।
दिव्या दिवि समुद्भूता भौमा भूमिसमुद्भवा ॥ १७ ॥
तल्लक्षणमशेषेण लिख्यते तन्निबोधत ।
देवदानवयोर्मध्ये खड्गसृष्टिरभूत् पुरा ।
ते खड्गाः पुण्यदेशेषु केषु केषु प्रतिष्ठिताः ॥ १८ ॥

दिव्य-लक्षणं यथा ।

ये खड्गाः स्थूलधारा भृशमतिलघवो निर्म्मलाङ्गाः सुनेत्राः,
ये रिष्टाश्वास्वरूपाः सुविमलतनव(१)श्चाप्यसंस्कारयोगात् ।
दुर्भेद्या दुर्घटाश्च ध्वनिगुणगुरवो यत्क्षते दाहपाकौ ;
ते दिव्याः कुर्व्वतेऽमी कुलधन-विजयश्रीयशोवृद्धिमाशु (२) ॥१९॥

अथ भौमलक्षणम् ।

वृहद्धारीते,—

पूर्व्वं महेशेन विषाणि यानि,
भुक्तानि तेषां पतितास्तु विन्दवः ।
यस्मिन् प्रदेशे स स एव देशः ;
कालायसामाकरतां जगाम ॥ २० ॥

पुरामृतं क्षीरसमुद्रमध्यादुत्पाद्य संगृह्य ययुः सुरेन्द्राः ।
तद्विन्दवो यत्र निपेतुरेष शुद्धायसामाकरतां जगाम ॥ २१ ॥
ये विषोत्था भृशं कालाः खराङ्गाः सम्भवन्ति हि ।
मूर्च्छादाहज्वरानाह शोक हिक्कावमीकराः ॥ २२ ॥

---

(१) लघव इति (क) पुस्तक पाठः ।
(२) वृद्धिमेते इति (ख) पुस्तक पाठः ।

येऽम्बुतोत्थाः (१) कर्व्वुराङ्गाः मन्दाङ्गाः सम्भवन्ति च ।
वलीपलितमालिन्य ज्वराव्याधि विनाशनाः ।
यत्रैव पतितं यत् तु तत्तदाकारतां गताः (२) ॥ २३ ॥

तद्यथा ।

वाराणसीमगधसिंहल-भूमिभागे,
नेपालभूमिषु तथाङ्ग महीप्रदेशे ।
सौराष्ट्रिकेऽन्यतरधन्य महीविभागे ;
शुद्धायसां कृतिवराः प्रवदन्ति जन्म ॥ २४ ॥

तद्यथा ।

वाराणसेयाः सुस्निग्धास्तीक्ष्णधाराः सदङ्गिनः ।
लघवः सुखसन्धेया ज्ञेयाश्चाभेद्यशालिनः ॥ २५ ॥
मागधाः कर्कशाः स्थूलधारा गूढतराङ्गिणः ।
गुरवो दुःखसन्धेयाः खड्गा ज्ञेया विचक्षणैः ॥ २६ ॥
नेपालदेश-प्रभवा निरङ्गा निश्चलाश्च ये ।
ज्ञेयाः (३) सदङ्गा मलिना लघवः स्थूलधारिणः ॥ २७ ॥
कलिङ्गा गुरवः स्वच्छा व्यक्ताङ्गास्तन्तुहेतवः ।
सौराष्ट्रा निर्म्मलाः स्निग्धाः सुव्यक्ताङ्गा भृशं खराः ॥ २८ ॥
सिंहलद्वीपजातानां चतुर्द्धा भेद उच्यते ।
केचित् सदङ्गा गुरवः कर्कशाः स्निग्धधारिणः ॥ २९ ॥
केचित् सदङ्गा लघवः सुस्निग्धाः स्थूलधारिणः ।
एषां रूपेण मिश्रेण ज्ञेया हि द्विजजातयः ॥ ३० ॥

---

(१) येऽम्बुतोथा इति (क) पुस्तक पाठः ।
(२) तत्तदाकारतां गतं इति (ख) पुस्तक पाठः ।
(३) अङ्गा इति (ग) पुस्तक पाठः ।

सामान्याद् द्विगुणश्चोक्तं(क्तं) कलिर्दशगुणस्ततः ।
कलेः शतगुणं भद्रं भद्राद्वज्रं सहस्रधा ॥ ३१ ॥
वज्रात् षष्टिगुणः पाण्डिर्निरविदंशभिर्गुणैः ।
ततः कोटिसहस्रेण ह्ययस्कान्तः प्रशस्यते ॥ ३२ ॥
[इत्यादिकं रसायनोपयोगिकमेव नतु खड्गे दृष्टफलम् ।]

यदाह ।

एषां तु लौहजातीनां वज्रं खड्गाय युज्यते ॥ ३३ ॥

तथाच ।

ये खड्गास्तीक्ष्णधारा भृशमतिगुरवः षड्गुणाढ्याः सुभेद्याः,
केचित् साङ्गा निरङ्गाः कतिचन समला निर्म्मलाः केचिदेव ।
ते भौमाः कुर्व्वतेऽमी धनविजयबलं षड्गुणा निर्गुणा वा ;
ते दुःखं स्तोकमुग्रं दधति बलकुलश्रीयशोनाशनास्ते ॥ ३४ ॥

इति खड्ग परीक्षायां भूम्यध्यायः सप्तमः ॥

अथाष्टधा ध्वनिः ।

ध्वनिरष्टविधः प्रोक्तो यः पूर्व्वं सूत्रसंग्रहे ।
तेषामपि लिखाम्यत्र सगुणं लक्षणाष्टकम् ॥ ३५ ॥

तद्यथा ।

हंस कांस्ये तथा मेघः ढक्का काकश्च तन्त्रिका ।
गर्द्दभः प्रस्तरश्चैव ध्वनिरष्टविधः स्मृतः ॥ ३६ ॥
पूर्व्वे चत्वारः शुभदाः परे निन्दास्पदा स्तथा ।
विचार्य्य खड्गमानञ्च कर्त्तव्यं खड्गकोविदैः ॥ ३७ ॥
घोरस्तार इति ख्यातो द्विविधः खड्गकोविदैः ।
घोरः स्यात् सुखसम्पत्त्यै तार उच्चाटने मतः ॥ ३८ ॥

यत्र हंसरवस्येव खड्गे नखहत (१) ध्वनिः ।
हंसध्वनिरयं खड्गः सकलार्थ प्रसाधनः ॥ ३८ ॥
कांस्यशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
कांस्यध्वनिरयं खड्गः प्राह नागार्ज्जुनो मुनिः ॥ ४० ॥

अभ्रस्य लक्षणं पतितम् ।

ढक्काशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
ढक्काध्वनिरयं खड्गः सर्व्वशत्रुनिसूदनः ॥ ४१ ॥
काकस्वर इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
काकस्वरोऽयं खड्गः स्यात् श्रीयशः कुलनाशनः ॥ ४२ ॥
तन्त्रीस्वरसमो यस्मिन् भवेत् खड्गे हते ध्वनिः ।
तन्त्रीध्वनिरयं खड्गः कुलश्रीधननाशनः ॥ ४३ ॥
खरस्येव धनिर्यस्मिन् खरध्वनिरयं मतः ।
श्रीयशो-ज्ञान-विज्ञान-जयतेजो विनाशनः ॥ ४४ ॥
प्रस्तरस्येव यः खड्गः स निन्द्यः खड्ग लक्षणे ॥ ४५ ॥
गभीरतार ध्वनिता खड्गस्य शुभलक्षणम् ।
उत्तानमन्द्रध्वनिता खड्गस्याशुभलक्षणम् ॥ ४६ ॥
अपाङ्ग नेत्रहीनोऽपि खड्गः सुध्वनिरुत्तमः (२) ।
अन्धः कुरूपो मनुजो यथा भुवि सुगायनः (३) ॥ ४७ ॥
सर्व्वलक्षणसम्पन्नः खड्गो यो ध्वनि-वर्ज्जितः ।
स निन्द्यः सुन्दराङ्गोऽपि यथा वाक्यविवर्ज्जितः ॥ ४८ ॥

---

(१) खड्गेन खड्गहते इति (क) पुस्तकपाठः ।
(२) खड्गेषु ध्वनिरुच्यते इति (ख) पुस्तक पाठः ।
(३) यदा भुवि युगायनः इति (ग) पुस्तक पाठः

नखेन वाथ दण्डेन तथा लौहशलाकया ।
लोष्ट्रेन शर्कराभिर्वा ध्वनि विज्ञानमुच्यते ॥ ४९ ॥

इति खड्ग परीक्षायां ध्वन्यध्यायोऽष्टमः ॥

अथ द्विविधं मानम् ।

यन्मानं द्विविधं प्रोक्तं तस्य लक्षणमुच्यते ।
उत्तमाधमभेदेन भेदोऽपि हि द्विविधो मतः ॥ ५० ॥
उत्तमं यद्विशालं स्याल्लघुमानं प्रकीर्त्तितम् ।
अधमं तच्च यत् खर्व्वं (१) गुरुमानं प्रकीर्त्तितम् ॥ ५१ ॥
तत्पुन स्त्रिविधं प्रोक्तमादिमध्यान्तभेदतः ॥ ५५२ ॥

यो मुष्टि विंशति समायततीव्रधारो,
भर्त्तुर्भवेत् प्रसरतोऽपि षड़ंगुलीभिः ।
मानेन चाष्ट पलिकः स हि खड्गमध्ये;
नाति प्रकृष्टन विकृष्टफलप्रदः स्यात् ॥ ५३ ॥
यो द्वादशाष्ट नवमुष्टिभिरायतः स्यात्,
मन्दो भवेत् प्रसरतोऽपि चतुर्थभागः ।
तावत् पलैः परिमितस्तु ततोऽधिको वा ;
खड्गाधमो धनयशः कुलनाशनाय ॥ ५४ ॥

नागार्ज्जुनोऽपि,—
यावत्यो मुष्टयो दैर्घ्ये तदर्द्धाङ्गुलयो यदा ।
प्रसरे तच्चतुर्थांशमिति वै मानमुत्तमम् ॥ ५५ ॥
यावत्यो मुष्टयो दैर्घ्ये प्रसरेतत्त्रिभागिकः ।
पलैस्तदर्द्धैस्तुलितः स खड्गो मध्य उच्यते ॥ ५६ ॥
यावत्यो मुष्टयो दैर्घ्ये तुल्यांशः प्रसरे तु तत् ।

---

(१) यच्च खरवं इति (क) पुस्तक पाठः ।

अधमः (१) कीर्त्तितः खड्गस्तत्समो वाधिकः पलैः ॥ ५७ ॥
भौमानामिदमुद्दिष्टं दिव्यास्तु लघवो मताः ॥ ५८ ॥

इति खड्ग परीक्षायां मानाध्यायः ।

भोजस्तु,—
दीर्घता लघुता चैव स्वरविस्तीर्णता तथा ।
दुर्भेद्यता सुघटता खड्गानां गुणसंग्रहः ॥ ५९ ॥
खर्व्वता गुरुता चैव मन्दता तनुता तथा ।
सुभेद्यता दुर्घटता खड्गानां दोषसंग्रहः ॥ ६० ॥
इति निखिलमुदारमुक्तमत्र बहुतन्त्रेषु निकृष्य खड्ग यष्टेः ।
नृपतिरिति विचिन्त्य यो विधत्ते स चिरतरां श्रियमुच्छ्रितां लभेत ॥ ६१ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ खड्ग परीक्षा ॥

—*—

## अथ चर्म्म-लक्षणम् ।

शरीरावरकं शस्त्रं चर्म्म इत्यभिधीयते ।
तत् पुनर्द्विविधं काष्ठं चर्म्मसम्भवभेदतः ॥ ६२ ॥
शरीरावरकत्वञ्च लघुता दृढ़ता तथा ।
दुर्भेद्यतेति कथिता चर्म्मणां गुणसंग्रहः ॥ ६३ ॥
स्वल्पता गुरुता (२) चैव मृदुता सुखभेद्यता ।
विरुद्धवर्णता (३) चेति चर्म्मणां दोष संग्रह ॥ ६४ ॥

---

(१) अधमे इति (क) पुस्तक पाठः ।
(२) लघुता इति (ख) पुस्तक पाठः ।
(३) वक्रता इति (ग) पुस्तक पाठः ।

सितो रक्तस्तथा पीतः कृष्ण इत्यभिशब्दितः।
ब्रह्मादिजाति भेदेन चर्म्मणां वर्णनिर्णयः ॥ ६५ ॥
चित्रवर्णस्तु सर्व्वेषां सर्व्वदैवोपपद्यते ॥ ६६ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ चर्म्मपरीक्षा ॥

——— ०० ———

## अथ धनुर्लक्षणम्।

धनुस्तु द्विविधं प्रोक्तं शार्ङ्गं वांशं(सं) तथैव च।
कोमलं वर्णदृढ़ता तयोर्गुण उदाहृतः ॥ ६७ ॥
सुखसम्पत्तिकरणं सममुच्चायतं धनुः।
विपदो मुष्टिवैषम्ये तदङ्गे भङ्गमावहेत् ॥ ६८ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ धनुःपरीक्षा ॥

——— ०० ———

## अथ वाण लक्षणम्।

लघुता दृढ़ता चैव तथा खरतरास्यता।
वाणानामिति निर्द्दिष्टो भूभुजां गुणसंग्रहः ॥ ६९ ॥
तन्मानं विदुषाकार्य्यमङ्गुलीभिर्यथोदितम्।
अङ्गुली मान वैषम्ये विजयो जायते रणे।
अङ्गुली मान साम्यतु भङ्ग एवोपजायते ॥ ७० ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ वाणपरीक्षा ॥

शरभल्लौखरतरौ लघु दृढ़तरौमतौ।
अर्द्धचन्द्रस्तुकथितो लघुतीव्रतराननः ॥ ७१ ॥
नाराचस्तुशिरालः स्यात्तीक्ष्णाग्रः कर्कशाग्रकः।
शक्तियष्ट्यादयोयेऽन्ये ते तीक्ष्णाग्राः प्रतिष्ठिताः ॥ ७२ ॥

इत्यादिशस्त्रजातानां लक्षणं भोजभूभुजा ।
प्रोक्तमत्यन्त संक्षेपाल्लिखितं मयकाक्षतु ॥ ७३ ॥
तीक्ष्णता लघुताचैव तथैव दृढ़तापि च ।
सर्व्वेषामस्त्र जातीनां लक्षणं समुदाहृतम् ॥ ७४ ॥
यत् किञ्चिदत्रमणिरत्नमति प्रकाश,
शस्त्रस्य लक्षणमिहस्वयमेव वुद्ध्या ।
विज्ञाय तन्निखिलशस्त्र(१)विदाजनेन,
शस्त्रं विधेयमरिपक्ष-विनाशनाय ॥ ७५ ॥
अस्त्रेण तु विना सैन्यमन्धवत्प्रतिजायते ।
तस्मादस्त्रं विशेषेण रक्षणीयं महीभुजा ॥ ७६ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ अस्त्र परीक्षा ॥

———*———

## अथ यात्रायुक्तिस्तत्रसमय: ।

यात्रायां द्विविध: कालो वैकाल: (२) सहजस्तथा ।
प्रोक्तमात्ययिके कार्य्ये वि(धि)कारो नात्र निर्णय: ॥ ७७ ॥
सहज स्वेच्छया राज्ञां तस्य निर्णय उच्यते ।
यात्राज सिंह मध्या शनैश्वर बुधोशनसां ग्रहेषु ॥ ७८ ॥
भानौ कुलीरवृषवृश्चिकगोभिर्दीर्घा
शस्तस्तुदेवलमतेऽध्वनि पृष्ठतोऽर्क: (३) ॥ ७९ ॥

---

(१) मख इति (क) पुस्तक पाठ: ।
(२) वैकार: इति (ख) पुस्तक पाठ: ।
(३) कर्क इति (ग) पुस्तकपाठ: ।

अश्विनी रेवती ज्येष्ठा तथा पुष्या पुनर्व्वसु।
मैत्रं मृगशिरो मूला यात्रायामुत्तमाः स्मृताः ॥ ८० ॥
भरणी कृत्तिकाश्लेषा विशाखा चोत्तरात्रयम्।
मघा पशुपतिश्चैव यात्रायां मरणप्रदाः ॥ ८१ ॥
ूर्वे कुवेरे दहने निशाटे, यमे जलेशे पवने महेशे।
याज्यं नरस्य प्रतिपत् क्रमेण ; युग्मं तिथीनां प्रवदन्ति तज्ज्ञाः।
यात् सम्मुखे(१) यानमसुच्चयाय, पश्चाद्भवेत् सर्व्वशुभाय पुंसाम् ॥८२॥
सूर्य्यः शुक्रः कुजो राहुर्मन्दश्चन्द्रो गुरुर्बुधः।
अग्रतः शोभना यात्रा पृष्ठतो मरणं ध्रुवम् ॥ ८३ ॥
र्वेणीन्द्रं दक्षिणे या(जा)नपा(प)दं, रोहिण्येतश्चार्य्यमाख्यञ्च(२) शूलम्।
ामं यायाम्साम्परायेषु कार्य्ये-ष्वन्यद्वापि प्रेक्ष्य शूलानि भानि ॥ ८४ ॥

तत्र दिक्शूलम्।

षष्ठ्यष्टमी चतुर्थी च नवमी द्वादशी तथा।
चतुर्द्दशी कुहूस्त्याज्या यात्रायामशुभप्रदाः ॥ ८५ ॥
प्रायो जगुः सहज शत्रुदशाय-संस्थाः,
पापाः शुभाः सवित्थजं (३) परिमुच्य खस्थम्।
सर्व्वत्रगाः शुभफलं जनयन्ति सौम्या-
स्त्यक्तारि-संस्थममरारि गुरुं जिगीषोः ॥ ८६ ॥
नाकालवर्षे विद्युत्स्तनितेष्विष्टं (४) कथञ्चिदपि यानम्।
आ सप्ताहात् दिव्यान्तरीक्षभौमैस्तथोत्पातैः ॥ ८७ ॥

---

(१) समुत्थे इति (क) पुस्तक पाठः।
(२) रोहिण्योतश्चार्य्यमाख्यञ्च इति (ख) पुस्तक पाठः।
(३) सवित्यजं इति (ग) पुस्तक पाठः।
(४) विद्युत्स्तुनितेष्विष्टं इति (घ) पुस्तक पाठः।

तत्र क्रमः।

राज्ञां यात्राविधिं वक्ष्ये जिगीषूणां (१) परावनीम्।
नीराजनाविधिं कृत्वा सैनिकां(क)स्तानयेत् ततः।
गजानन्यान् मृगानन्यानिति यात्राक्रमो मतः॥ ८८॥

अथ तत्र नीराजनाविधिः।

वर्षान्तेऽभ्युदिते शुक्रे चन्द्रे पूर्णे शुभक्षणे।
अश्व-नीराजनं कुर्य्याद् यथोक्तमृषिसत्तमैः॥ ८९॥
उदीचीं प्रस्थिते भानौ संक्रान्त्यां वा शुभे दिने।
गज-नीराजनं कुर्य्यात् महीपालो जिगीषिवान्॥ ९०॥
वृश्चिकस्थे रवौ कुर्य्यात् पत्तिनीराजना-विधिम्।
नौका-नीराजनं कुर्य्यात् दक्षिणाशां प्रतिष्ठते॥ ९१॥
अन्येषाञ्चैव (२) यानानां विजयादशमीतिथिम्।
ध्वजादीनाञ्च सर्वेषां शक्रोत्थाने नीराजनम्॥ ९२॥
छत्रस्य नवदण्डस्य तथा सिंहासनस्य च।
गृहस्य नगरस्यापि महाविषुव-संक्रमे॥ ९३॥
आत्मनो युवराजस्य महिष्या मन्त्रिणां तथा।
स्वजन्मदिवसे राजा कुर्य्यान्नीराजना-विधिम्॥
अभिषेक-दिनं प्रोक्तमेषां जन्मदिनं मया (३)॥ ९४॥

तद्यथा।

अश्वानां भास्करो देवो रेवन्तमिति संज्ञया।
गजानां देवता शक्रः पत्तीनां कालिकामता (४)॥ ९५॥

---

(१) जिगीषाणां इति (क) पुस्तकपाठः।
(२) अन्यासाञ्चैव इति (ख) पुस्तकपाठः।
(३) जन्मदिनाख्यया इति (ग) पुस्तकपाठः।
(४) शत्रुः पत्तीनां कालिका मता इति (घ) पुस्तकपाठः।

नौकाणां वरुणो देवो यानानान्तु जयन्तकः ।
अस्त्राणां देवता रामो यमः खड्गस्य पूज्यते ॥ ९६ ॥
ध्वजानां हनुमान् पूज्यो वृहस्पतिरिति क्रमात् ।
तान् पूजयित्वा विधिवद्देतान् नीराजयेन्नृपः ॥ ९७ ॥
द्वादश महिषैः पुष्टैश्चामर-घण्टाम्बनादिभूषाढ्यैः ।
छागलैर्महिषद्विगुणैः छागलद्विगुणैर्वृषैः स्व पुष्टाङ्गैः ॥ ९८ ॥
वृषभद्विगुणैः पुरुषैस्तद्विगुणैश्चारुदीपिकाभिः ।
भव्यं वा सहस्रं शुभदिने नीराजयेद्राजा ॥ ९९ ॥
द्वादश-वाहै रुचिरैः साङ्गोपाङ्गैरतोऽर्द्धैतश्चोष्ट्रैः ।
तस्यार्द्धैतो व्याघ्रैर्गजशत-नीराजनं सम्भवति ॥ १०० ॥
छागलशतं वृषभशतं शतञ्च मेषाणाम् ।
तुरगा दश हृष्टाङ्गा व्याघ्राः पञ्च द्विपश्चैकः ॥ १ ॥
भल्लूका हि कुक्कुराश्चैकैकाः पत्तिलक्षणस्य ।
नौका शतकं साङ्गं नवदशकं काञ्चनादिभिर्घटितम् ॥ २ ॥
बहुशतमपि जन्तूनां नौका नीराजने राज्ञाम् ।
यद्वा द्विपदं यानं सर्व्वेषामिष्यते तुरगैः ॥ ३ ॥
स्वदशा (१) वत्सरवसितै योग्याङ्गैर्योग्यवर्णैश्च ।
अष्टाभिर्धातुभिः कुर्य्यादस्त्र-नीराजना-विधिम् ॥ ४ ॥
गजाश्व नर नौकाभि र्द्विगुणाभिर्यथोत्तरम् ।
रत्नैर्नानाविधैरस्त्रैर्धातुभिर्वसनैस्तथा ॥ ५ ॥
सिंहासनैश्च योग्यैश्च कुर्य्यान्नीराजना-विधिम् ।
गृहनीराजनाप्येवं नरस्याथ निगद्यते ॥ ६ ॥
श्वभिः खरैः शृगालैश्च व्याघ्रै रुष्ट्रैस्तथोद्धतैः ।
पुरं नीराजयेद्राजा चिरसम्पत्ति-हेतवे ॥ ७ ॥

(१) सु दशा इति (क) पुस्तक पाठः ।

स्वा दद्याच्चस्तदर्द्धेन नरस्चैव तदर्द्धतः ।
व्याघ्रादीनां तथैवैकं रत्नं नानाविधं तथा ॥ ८ ॥
अस्त्राणि धातवश्चैव वस्त्राणि च फलानि च ।
वनजाः स्थलजाश्चैव जलजाश्चैव जन्तवः ॥ ९ ॥
नवग्रहाश्च सूर्य्याद्याः शैलाः सप्तघटास्तथा ।
योग्यधातु-समुद्भूता नौकाखण्डत्रयं तथा ॥ १० ॥
एकैकं द्विपदं यानं खट्टा शय्यासनं तथा ।
निज-देहमितं स्वर्णं रजतं ताम्रमेव वा ॥ ११ ॥
आत्म-नीराजने दद्याद् यदिच्छेच्चिर-संस्थितिम् ।
अस्त्रैर्नानाविधैः कुर्य्याद् युवराज-निराजनम् ॥ १२ ॥
अलङ्कारैश्च विविधैर्देवी-नीराजनं मतम् ।
मन्त्रि-नीराजनं राजा हयेनैव समाचरेत् ॥ १३ ॥
अमात्यानां सैनिकानां विप्राणां धनिनां तथा ।
वस्त्रैर्नीराजनं कुर्य्यादिति भोजस्य सम्मतम् ॥ १४ ॥
नीराजनाया वस्तूनि न पश्येन्न पुनः स्पृशेत् ।
सप्तकृत्वः परिभ्राम्य कुर्य्यान्नीराजनाविधिम् ॥ १५ ॥
न्यसेद्वा परराष्ट्रेषु गहने वा जलेऽपि वा ।
दैवज्ञ-वैद्य-दीनेभ्य प्रयच्छेद्वा यथायथम् ॥ १६ ॥
इति संक्षेपतः प्रोक्तो मया नीराजनाविधिः ।
अनेन विधिना राजा सुचिरं सुखमश्नुते ॥ १७ ॥

तथाहि गर्गः ।

नीराजना महीन्द्राणां निहन्ति विपदोऽखिलाः ।
सैव सन्नहनं (१) राज्ञां कञ्चुकेनेव संयतः ॥ १८ ॥

---

(१) सन्दहनम् इति (क) पुस्तक पाठः ।

नीराजना वन्दितानां नभयं विद्यते क्वचित् ।
नीराजना-विहीनानां नश्येयुः सर्व्वसम्पदः ॥ १८ ॥

तथा च वात्स्यः ।

ये भूमिपालाः प्रतिवत्सरान्ते,
कुर्व्वन्ति नीराजन-कर्म्मसम्यक् ।
तेषां न लक्ष्मीः क्षयतामुपैति,
साम्राज्य लक्ष्मीः करगैव तेषाम् ॥ २० ॥

एवं नीराजनं कृत्वा (१) राजा प्रस्थानमाचरेत् ।
प्रस्थानं यानतोयस्मात्तस्माद्यानं निरूप्यते ॥ २१ ॥
चतुष्पदं द्विपदञ्च अ(श्वा)पदश्चेति तत्त्रिधा ।
यानेषु वाहिनो मुख्या निर्द्दिष्टाः सर्व्वसम्मताः ।
अतस्तेषां प्रवक्ष्यामि लक्षणत्वमतः परम् ॥ २२ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ नीराजनविधिः ।

---

## अथाश्वपरीक्षा ।

सपक्षा राजिनः पूर्व्वं संजाता व्योमचारिणः ।
गन्धर्व्वेभ्यो यथाकामं गच्छन्ति च समन्विताः ॥ २३ ॥
इन्द्रादेशाच्छालिहोत्रस्तेषां पक्षमथाच्छिनत् ।
ततः प्रभृति निष्पक्षा स्तुरङ्गा धरणीं गताः ॥ २४ ॥
उत्तमा मध्यमा नीचाः कणीयांसस्तथा परे ।
चतुर्द्धा वाजिनो भूमौ जायन्ते देशसंश्रयात् ॥ २५ ॥

---

(१) त्यक्ता इति (क) पुस्तक पाठः ।

ताजिताः खुरशालाश्च तुषाराश्चोत्तमा हयाः ।
गोजिकाणाश्च केकाणाः प्रौढ़ाहाराश्च मध्यमाः ॥ २६ ॥
ताड़जा उत्तमाशाश्च राज-शूलाश्च मध्यमाः ।
गव्वराः साध्य (१) वासाश्च सिन्धुदाराः कणीयसः ॥ २७ ॥
अन्यदेशोद्भवा ये च ते वै नीचाः प्रकीर्त्तिताः ।
वाजिनो जलजाः केचिद्वह्निजातास्तथापरे ॥ २८ ॥
समीरप्रभवाश्चान्ये तुरगा मृगजाः परे ।
जलोद्भवा द्विजा ज्ञेयाः चत्रिया वह्नि-सम्भवाः ॥ २९ ॥
प्रभञ्जनभवा वैश्या मृगजाः शूद्रजातयः ।
पुष्पगन्धिर्भवेद्विप्रः चत्रियो गुरुगन्धिकः ॥ ३० ॥
घृतगन्धो भवेद्वैश्यो मीनामोदो च शूद्रकः ।
विवेकी सद्गुणो विप्रस्तेजस्वी चत्रियो वली ॥ ३१ ॥
कोषाभावो (२) भवेद्वैश्यः शूद्रो निःसत्त्वको भवेत् ।
विप्राद्या वाहनाः सर्व्वे त्रयो भूमिपतेः सदा ।
शूद्रजातिं तुरङ्गन्तु न स्पृशन्ति नरेश्वराः ॥ ३२ ॥

इत्यश्वोत्पत्तिः ।

अथाङ्गुल्याङ्गविभागः ।

सप्तविंशत्यङ्गुलीभिर्मुख-मानं विधीयते ।
कर्णौ षड़ङ्गुलौ प्रोक्तौ भालकं चतुरङ्गुलम् ॥ ३३ ॥
चत्वारिंशच्च सप्ताद्यः (३) स्कन्धः संपरिकीर्त्तितः ।
पृष्ठवंशश्चतुर्विंशः सप्तविंशा तथा कटौ ॥ ३४ ॥

---

(१) साध्यवासाश्च इति (क) पुस्तक पाठः ।
(२) कोषाभावे इति (ख) पुस्तक पाठः ।
(३) सप्ताढ्या इति (ग) पुस्तक पाठः ।

इति सूक्ष्मं तथा निम्नं प्रतिपुच्छं द्वयाधिकम्।
लिङ्गं हस्त-प्रमाणन्तु तथाण्डौ चतुरङ्गुलौ॥ ३५॥
मध्य (१) स्थानं चतुर्विंशं हृदयं षोड़शात्मकम्।
कटिकुक्ष्य(कक्षा)न्तरं प्रोक्तं चत्वारिंशत् प्रमाणतः॥ ३६॥
मणिवन्ध-द्वयञ्चैव क्षुराश्च चतुरङ्गुलाः।
अशीत्यङ्गुलिकाः पादा दीर्घा विंशाधिका मताः॥ ३७॥

इत्यश्वाङ्गुलि-विभागः।

अथ वर्णाः।

यदाह नकुलः,—
सप्तवर्णा भवन्तीह सर्व्वेषां वाजिनां ध्रुवम्।
तानहं कीर्त्तयिष्यामि भेदैर्जाताननेकधा॥ ३८॥
सितो रक्तस्तथा पीतः सारङ्गः पिङ्ग एव च।
नीलः कृष्णोऽथ सर्व्वेषां श्वेतः श्रेष्ठतमो मतः॥ ३९॥
श्वेतः कुन्देन्दुसङ्काशो रक्तः कौसुम्भ (२) सन्निभः।
हरिद्रा-सदृशः पीतः सारङ्गः कर्व्वुरः स्मृतः॥ ४०॥
पिश(ष)ङ्गः कपिलाकारो नीलो दूर्व्वादल-प्रभः।
कृष्णो जम्बुफलाकारः शास्त्रज्ञैः समुदाहृतः॥ ४१॥

इत्यश्व-वर्णाः।

अथ वयोविभागः।

दन्तेषु व्यञ्जनं यद्वत् (३) तेन ज्ञेयो वयःक्रमः॥ ४२॥

---

(१) माकु इति (क) पुस्तक पाठः।
(२) कुन्देन्दु इति (ख) पुस्तक पाठः।
(३) यद्व यत् इति (ग) पुस्तक पाठः।

तद्यथा—

कालिका हरिणी शुक्ला काचा मक्षिकया सह ।
शङ्खो मूषलकश्चैव दन्तानां चलतां(ता)तथा ।
इत्यष्टौ व्यञ्जनान्याहुरथैषां लक्षणं शृणु ॥ ४३ ॥
चतुर्भिर्वत्सरैर्द्दन्तास्त्वार: परिकीर्त्तिता: ।
पञ्चभिश्च षड़ित्येवं जायन्ते त्वथ कालिका: ॥ ४४ ॥
षष्ठे संवत्सरे प्राप्ते कालिकाख्या भवेत् तु हि ।
तथान्या सप्तमे वर्षे चतुर्थी (१) कालिका भवेत् ॥ ४५ ॥
अष्टमे वत्सरे प्राप्ते जायन्ते सर्व्वकालिका: ।
नवमे त्वथ ता: सर्व्वा आपीता: सम्भवन्ति च ॥ ४६ ॥
केचिदेकादशे वर्षे तावत् पीतत्वमागता: ।
तत: श्वेता: प्रजायन्ते चतुर्द्दशसमावधि ॥ ४७ ॥
तत: काचप्रभा: सम्यग् यावत् संवत्सरास्त्रय: ।
तत: सप्तदशादूर्द्धं यावद्वर्षाणि विंशति: ॥ ४८ ॥
मक्षिकाभां वदन्त्येषां (२) यावद्वर्षत्रयं पुन: ।
शङ्खाभासा: सर्व्वदन्ता भवन्ति वाजिनां तत: ॥ ४९ ॥
त्रयोविंशात् परे वर्षे दशमा मूषला मता: ।
षड़विंशात् परतो दन्ता: स्थानाच्चलनमाप्नुयु: ॥ ५० ॥
यावद्वर्षत्रयं पश्चान्निपतन्ति समात्रये ।
द्वात्रिंशद्वत्सरे वाजी नूनं निर्व्वाणमाप्नुयात् ॥ ५१ ॥

इत्यश्व-वय: स्थानम् ।

---

(१) चतुर्थं इति (क) पुस्तक पाठ: ।
(२) मक्षिभाभावदन्तेषां इति (ख) पुस्तक पाठ: ।

अथ अश्वस्य शुभलक्षणानि।

दीर्घाः शुष्का विशालास्या ये भवन्ति तुरङ्गमाः।
ते शस्ताः पार्थिवेन्द्रस्य यानवाहनकर्म्मणि ॥ ५२ ॥

आस्यं भुजौ चापि कृकाटिका च,
दीर्घं चतुष्कं तुरगस्य शस्तम्।
तथोन्नते घ्राणपुटे ललाटे;
शफश्च (१) वाजिप्रवरस्य बोध्यः ॥ ५३ ॥

श्रोत्रे च मणिवन्धश्च पुच्छं कोष्ठं लघूत्तमम्।
पीताङ्गः श्वेतपादो यो यश्च स्यात् सितलोचनः (२) ॥ ५४ ॥
चक्रवाकः स विज्ञेयो राजार्हः प्रियसत्तमः।
मुखे चन्द्रकसंवीतः पक्वजम्बूफलाकृतिः ॥ ५५ ॥
श्वेतपादः स विज्ञेयो मल्लिकाख्यः सुपूजितः (३)।
सर्व्वश्वेतो हयो यस्तु श्यामैकश्रवणो भवेत् ॥ ५६ ॥
स वाजी वाजिमेधार्हः श्यामकर्णः सुदुर्लभः।
यस्य पादाः सिताः सर्व्वे पुच्छो मुष्को मुखं तथा ॥ ५७ ॥
मूर्द्धजास्तु सिता यस्य तं विद्यादष्टमङ्गलम्।
यस्य पादाः सिताः सर्व्वे चन्द्रकश्च ललाटके ॥ ५८ ॥
कल्याणपञ्चकः प्रोक्तो भर्त्तुः कल्याण-कारकः।
विमिश्रवर्णकाः सर्व्वे प्रशस्ता वाजिनो मताः ॥ ५९ ॥
यस्योत्कृष्टतरा वर्णा वृद्धिं यान्ति शनैः शनैः।
नाशयन्ति तथा नीचान् करोति स बहून् जयान् ॥ ६० ॥

इत्यश्वस्य शुभलक्षणानि।

---

(१) कफश्च इति (क) पुस्तकपाठः।

(२) स्याच्छितलोचनः इति (ख) पुस्तकपाठः।

(३) स पूजितः इति (ग) पुस्तकपाठः।

अथाश्वस्य आवर्त्तगुणाः ।

रोम्नां (१) भ्रमिवदावृत्तिरावर्त्त इति गद्यते ।
षड्विधो दक्षिणो वामो दक्षिणस्तु शुभावहः ॥ ६१ ॥
नासिकाग्रे ललाटाग्रे शङ्खे कण्ठे च मस्तके ।
आवर्त्तो जायते येषां ते धन्यास्तु तुरङ्गमाः ॥ ६२ ॥
ललाटे यस्य चावर्त्तो द्वितीयस्तु कुकुन्दरे ।
मस्तके च तृतीयस्तु स विज्ञेयो हयोत्तमः ॥ ६३ ॥
द(ग)ण्डावर्त्तो भवेद्यस्य वाजिनो दक्षिणाश्रयः ।
स करोति महासौख्यं स्वामिनः शिरसंश्रितः (२) ॥ ६४ ॥
कर्णमूले यदावर्त्तः स्तनमध्ये तथापरः ।
विजयाख्यावुभौ तौ तु युद्धकाले जयप्रदौ ॥ ६५ ॥
स्कन्धपार्श्वे यदावर्त्तः स भवेत् सुखकारकः ।
नासामध्ये यदावर्त्त एको वा यदि वा त्रयः ॥ ६६ ॥
चक्रवर्त्ती स विज्ञेयो वाजी भूपाल-भूषितः ।
कण्ठे यस्य महावर्त्तः प्रोक्तश्चिन्तामणिः शुभः ॥ ६७ ॥
रोम्नां वृश्चिकवत् स्थानं शुक्तिरित्यभिधीयते ।
यत्रावर्त्तः शुभस्तत्र शुक्तिस्तत्र शुभावहा (३) ॥ ६८ ॥

इति आवर्त्त गुणाः ।

---

अथाश्वस्य दोषाः ।

चत्वारोऽप्यसिताः पादाः सर्व्वश्वेतस्य वाजिनः ।
भवन्ति यस्य स त्याज्यो यमदूतः सुदूरतः ॥ ६९ ॥

---

(१) व्योम्नां इति (क) पुस्तकपाठः

(२) शिरःसञ्ज्ञितः इति (ख) पुस्तकपाठः ।

(३) शुभा भवेत् इति (ग) पुस्तकपाठः ।

चत्वारो यस्य वै पादाः परस्पर विवर्णकाः।
स त्याज्यो मुषलो नाम्ना मुनिभिः कुलनाशनः॥ ७०॥
दुर्लक्ष्म वाजिनं जह्याद् यदीच्छेत् शाश्वतीं श्रियम्।
यस्तु(स्य) वर्णविभेदेन ज्ञायते रोमसम्भवात्॥ ७१॥
पुष्पाख्यः स परित्याज्यः सर्व्ववाजि-भयावहः।
यस्यावशेष वर्णेन छाद्यते च प्रधानतः॥ ७२॥
विवृद्धिं गच्छतः सोऽश्वः कुरुते हयसंक्षयम्॥ ७३॥
इति स्कन्धे गले चैव कटिदेशे तथैव च।
नाभौ कुक्षौ च पार्श्वांशे (१) मध्यमः स प्रकीर्त्तितः॥ ७४॥
एको वामकपोलस्थो यस्यावर्त्तः प्रदृश्यते।
चर्व्वणो स हयस्त्याज्यः कुरुते स्वामिनाशनम्॥ ७५॥
वामगण्डाश्रयावर्त्तः प्रकरोति धनक्षयम्।
कक्षान्ते यस्य चावर्त्तः स मृत्युं कुरुते विभोः॥ ७६॥
क्लेशं जानुगतावर्त्तः प्रवासं कुरुतेऽथ वा।
वाजीमेढ्रगतावर्त्तो वर्ज्जनीयो मृहोभुजा॥ ७७॥
त्रिवलि प्रभवावर्त्त स्त्रिवर्गस्य प्रणाशकः।
पृष्ठवंशे यदावर्त्त एकः संपरिलक्ष्यते।
धूमकेतुरिति ख्यातः स त्याज्यो दूरतो नृपैः॥ ७८॥
गुह्ये पुच्छे वलौ यस्य भवन्त्यावर्त्तकास्त्रयः।
स कृतान्तस्तु रूपेण वर्ज्जनीयस्तुरङ्गमः॥ ७९॥
अधोर्द्धञ्च यदा वाजी सम्पुटं न स्पृशेत् क्वचित्।
यमदूतः स विज्ञेयो वर्ज्जनीयस्तुरङ्गमः॥ ८०॥
हीनदन्तोऽधिकश्चैव करालो कृष्णतालुकः।
मुषलो च तथा शृङ्गी षडेते घातकाः स्मृताः॥ ८१॥

---

(१) पार्श्वांसे इति (क) पुस्तक पाठः।

तत्राद्यौ विदितार्थौं तु शेषाणां लक्षणं शृणु ।
त्रयः पादाः सिता यस्य कृष्णश्चैकोऽभिजायते ॥ ८२ ॥
त्रयो वाप्यसिता यस्य एकः शुक्लोऽभिजायते (१) ।
मुषलो नाम पापोऽयं दूरे त्याज्यो ह्याधमः ॥ ८३ ॥
विकटो विषमो यस्य दशनः स करालकः ।
करालो कुरुते नाशं भर्त्तुरत्र न संशयः ॥ ८४ ॥
कृष्णतालुर्ह्ययो नाशं कुरुते नात्र संशयः ।
विषदन्तो भवेद्यस्तु कृष्णतालु न दुष्यते ॥ ८५ ॥
कर्णान्ते चूलिकान्ते च शृङ्गवल्लक्ष्यते यदि ।
स शृङ्गी कुरुते नाशं राष्ट्रस्य च कुलस्य च ॥ ८६ ॥
एकाण्डोऽजातकाण्डश्च हीनाण्डोऽभ्यधिकाण्डकः ।
घण्टो (२) च कम्बलो चैव षड़ेते पापकृत्तमाः ॥ ८७ ॥

इत्यश्वस्य दोषाः ।

अथाश्वस्यारिष्टम् ।

सुस्थस्यापि च नेत्रान्ते स्यातां नीले च वाजिनः ।
तथैव तस्य जानीयात् भवेन्मृत्युर्द्विवार्षिकी ॥ ८८ ॥
नीलपीते च नेत्रान्ते त्रिभिर्मासैर्वपुःक्षयः ।
यस्य नेत्रान्तरे रेखा बहुवर्णा प्रजायते ॥ ८९ ॥
विशेषाद्वाजिनो ज्ञेयं तस्यायुः पञ्चमासिकम् ।
जिह्वायां जायते विन्दुरकस्माद्यदिवाजिनः ॥ ९० ॥
मासैकं जीवितं तत्र पीते मासद्वयं तथा ।
रक्ते मृत्युस्त्रिभिर्मासैश्चतुर्भिश्च विचित्रके ॥ ९१ ॥

---

(१) विजायते इति (क) पुस्तक पाठः ।
(२) घण्टौ इति (ख) पुस्तक पाठः ।

पञ्चभिर्नीलवर्णे च षड्भिर्वभ्र् (१) समाकृतौ ।
सप्तभिः पाटलाकारे चणकाभे तथाष्टभिः ॥ ९२ ॥
नवभिश्च हरिद्राभे दशभिर्जतुकोपमे ।
एकादशे सुवर्णाभे वत्सरेण हिमद्युतौ ॥ ९३ ॥
यस्य श्वासो भवेदुष्णः शरीरं पुलकान्वितम् (२) ।
जिह्वा हि मलिनाकारा मासषट्कं स जीवति ॥ ९४ ॥
जिह्वाग्रे पिड़का यस्य पादान्ते च तथोदरे ।
मूत्रं करोति रक्तं वा मासषट्कं स जीवति ॥ ९५ ॥
कर्णयोः क्षतजं यस्य नेत्राभ्यां वा प्रवर्त्तते ।
वाजिनः पित्तग्रस्तस्य दश मासान् स जीवति ॥ ९६ ॥
यस्य नेत्रे हरिद्राभे यस्य वातार्द्दितस्य च ।
तस्यायुः सप्तमासीयं बहुवर्णे तथा दिनैः ॥ ९७ ॥
यस्यैकं लोचनं हीनं द्वितीयं रक्तसन्निभम् ।
पुटान्ते च स विज्ञेयः पीताभे (३) मासजीवकः ॥ ९८ ॥
(एतानि अरिष्टानि वक्त्रदोषजानि ।)
स्फुलिङ्गा यस्य दृश्यन्ते पुच्छतोऽश्वस्य वह्निजाः ।
निर्गच्छन्तः प्रभोर्नाशं ते वदन्ति निशागमे ॥ ९९ ॥
अश्वशालां समासाद्य यदा च मधुमक्षिकाः ।
मधुजालं प्रवध्नन्ति तदाश्वान् (४) घ्नन्ति तत्क्षणः ॥ १०० ॥

इत्यरिष्टानि ।

---

(१) वभ्र इति (क) पुस्तक पाठः ।
(२) पुलकाङ्कितम् इति (ख) पुस्तक पाठः ।
(३) पीताभो इति (ग) पुस्तक पाठः ।
(४) तदश्वान् इति (घ) पुस्तकपाठः ।

अथ हय क्रियाकालः ।

स्ववरुण गुरुपार्श्वास्येषु भौमार्कवारे,
स्वतिथि करणताराचन्द्रयोगोदयेषु ।
शुभमिह हयः काष्ठं (१) कार्य्यमार्य्येण बुद्धा ;
न शनिरविकुजानां वासरे नोग्रतारे ॥ १ ॥

इति हयक्रियाकालः ।

अथ हयारोहण ज्ञानम् ।

चलकिशलयपादः कर्णमध्यैक दृष्टि-,
र्नचलति कटिदेशः स्वासने संस्थितो यः ।
हयहृदयगतिज्ञः स्थानदण्डावतापः (२) ;
स खलु तुरगयाता पूज्यते पार्थिवेन्द्रैः ॥ २ ॥
मेरुः स्थिरो यस्य चलौ च पादौ,
त्रिकोन्नतं संहतमासनञ्च ।
स वाजिवाहः प्रथितः पृथिव्यां ;
शेषा नरा भारकरा हयानाम् ॥ ३ ॥

इति हयारोहणं ज्ञानम् ।

अथ हयताड़नविधिः ।

रक्ताकोष्ठे (३) मुखे चौष्ठे गले पुच्छे च ताड़येत् ।
भीते वक्षःस्थलं हन्यादङ्गं चोन्मार्गगामिनः ॥ ४ ॥

---

(१) काष्ठं इति (क) पुस्तक पाठः ।
(२) स्थानदण्डावपाती इति (ख) पुस्तक पाठः ।
(३) कण्ठे इति (ग) पुस्तक पाठः ।

कुपिते पुच्छसंस्थानं भ्रान्ते जानुद्वयं तथा ।
सर्व्वस्या(स्य)प्राप्तदण्डस्य दण्डमेकं निपातयेत् ॥ ५ ॥
यद्यत्प्रस्खलति गात्रं तत्र दण्डं निपातयेत् ।
अस्थानदण्डपाताच्च बहुदोषः प्रजायते ।
तस्मान्निरीक्ष्य कर्त्तव्यं हये दण्डनिपातनम् ॥ ६ ॥

इति हय ताड़नविधिः ।

अथ हयधावनविधिः ।

हस्तैश्चतुर्विंशतिभिर्धनुर्दण्ड उदाहृतः ।
अक्ष्णो र्निमेषणान्यष्टौ मात्रा प्रोक्ता विचक्षणैः ॥ ७ ॥
मात्रा षोड़शकेनाश्वो यो धावति धनुःशतम् ।
तमुत्तमोत्तमं विद्याद्वायुवेगं महाजवम् (१) ॥ ८ ॥
विंशत्या मध्यमो ज्ञेयो ह्यतोऽन्ये चाधमा मताः ।
नभस्याश्वयुजे मासि नैवाश्वान् वाहयेन्नृपः ॥ ९ ॥
वज्राग्नि-सदृशं पित्तं श्रमात् कुप्यति वाजिनाम् ।
कार्य्येण महता वापि योज्यो मासि तु कार्त्तिके ॥ १० ॥
हेमन्ते शिशिरे योगी वसन्ते च यदृच्छया ।
वालं वृद्धं कृशं रुग्नं दत्तस्नेहं बृहद्वलिम् (२) ।
पूर्णातिरिक्त कोष्ठञ्च गुर्व्विणीञ्च न वाहयेत् ॥ ११ ॥

इति हयधावनविधिः ।

---

(१) महाजरम् इति (क) पुस्तक पाठः ।

(२) वालो वृद्धः कृशो रोगी दण्डस्नेही वृहद्वलिः इति (ख) पुस्तक पाठः ।

## अथ हयरक्तमोक्षणविधिः ।

द्वासप्ततिसहस्राणि नाड़ीनां सम्भवन्ति हि ।
वाजिनामिह सर्व्वेषामाशु रक्तं व्यवस्थितम् ॥ १२ ॥
तासां निर्म्मोक्षणार्थाय द्वाराण्यष्टौ वदाम्यहम् ।
यैर्याति कुत्सितं रक्तं सर्व्वदेहसमुद्भवम् ॥ १३ ॥
कण्ठे कक्षे लोचनयो रंसयोश्च मुखे तथा ।
अण्डयोरथ पादेषु पार्श्वयोरुभयोरपि ॥ १४ ॥
एतद्वर्त्म (१) सुविज्ञेयं वाजिनां भिषगुत्तमैः ।
अन्ये सप्तदशान्याहुः शिराद्वाराणि वाजिनः ॥ १५ ॥
येषु रक्तं हृतं सद्यः प्रकरोति ततः सुखम् ।
गुल्फे गले तथा मेढ्रे कक्षान्ते चैव पत्रके ॥ १६ ॥
गुदे पुच्छेऽथ वस्तौ च जङ्घयोः सर्व्वसन्धिषु ।
जिह्वायाञ्चाधरे चौष्ठे नेत्रयोरुभयोरपि ॥ १७ ॥
कर्णमूले मणौ गण्डे (२) रुधिरं स्रावयेद्भिषक् ।
सौश्रुतमानप(पा)लेन त्याज्यं रक्तं तुरङ्गप्रमाणम् ॥ १८ ॥

तद्यथा ।

पलं शतं मुखे त्याज्यं (३) कक्षयोश्चैकमेव च ।
शतार्द्धं नेत्रदेशाच्च मेढ्रदेशात् तथैव च ॥ १९ ॥
गण्डयोरण्डयोश्चैव स्रावयेत् पञ्चविंशतिम् ।
द्वादशैव गुदे प्राहुरश्व(४) शास्त्रविचक्षणाः ॥ २० ॥

---

(१) एतद्धर्म्मं सविज्ञेयो वाजिनां भिषगुत्तमम् इति (क) पुस्तक पाठः ।
(२) कर्णमूले मनै प्रान्ते इति (ख) पुस्तक पाठः ।
(३) न्याय्यं इति (ग) पुस्तक पाठः ।
(४) प्राहुरश्व इति (घ) पुस्तक पाठः ।

पैत्तिकं कालिकं विद्याद्वाते विद्यात् कफेऽनिलम् ।
पिच्छिलं श्लेष्मलं पाण्डु कषायोदकवच्च यत् ॥ २१ ॥

इति हय रक्त-मोक्षणविधिः ।

अथ हय-ऋतुचर्य्या ।

न प्रावृषि वाहयेदश्वान् प्रावृट्काले कथञ्चन ।
यदोच्छेदस्रुतं (१) तस्य वाहनं दशमासिकम् ॥ २२ ॥

कूपोदकं कटुकतैल-निवात(ह)गेहं,
शस्तं पलार्द्धलवणं दिवसान्तरेण ।
तत्रान्यथा सति मुखामयवीर्य्यहानि-
मुख्यैर्बलैर्विरहितस्तु वयो (२) विनश्येत् ॥ २३ ॥
शरदि गुड़घृतं (३) पयः प्रशस्तं,
शरदि सिताष्टपल प्रमाणमच्छम् ।
मधुरमथ जलं सरोवरोत्थं ;
घृतयुतनील मुकुष्टकाश्च (४) भोज्याः ॥ २४ ॥
हेमन्तकाले घृत तैलमाषा(षाः),
निर्व्वातसंस्था च पयो यथेच्छम् ।
शनैः शनैर्वाहनकर्म्मकुर्य्याद् ;
यवांश्च पक्वा (५) वितरेद् विधिज्ञः ॥ २५ ॥

---

(१) यदोच्छेदग्रतः इति (क) पुस्तक पाठः ।
(२) रगी इति (ख) पुस्तक पाठः ।
(३) युतं इति (ग) पुस्तक पाठः ।
(४) मुकुन्दकाश्च इति (घ) पुस्तक पाठः ।
(५) मुक्ता इति (च) पुस्तक पाठः ।

शिशिरे तैल पलाष्टकं कटिस्थं,
दिनसप्तावधि पाययेत् तुरङ्गान्।
तदनु प्रातर्भोजयेद् यवांश्च;
यवयवसांश्च तथामृतस्वरूपान्॥ २६॥

यस्य दत्ता यवाभोज्ये शिशिरे समुपस्थिते।
अकृत्वापि क्रियाः सर्व्वाः स हयः सुखमृच्छति॥ २७॥

वसन्ते संप्राप्ते निजसुखवशाद्वाहय हयान्,
घृतं तैलं शस्तं सकलविधिरुक्तोऽपि च मतः।
पयो दद्यादस्मै सलवणमथो वाहनविधि-;
र्भृशं योज्यस्तेनाब्दमपि सुखमिच्छेद्धयवरः॥ २८॥

वसन्तसमये योऽश्वः स्थाने तिष्ठति बन्धने।
तस्योत्साहः प्रणश्येत सालस्यं जायते वपुः॥ २९॥

ग्रीष्मे घृतं च्चतजमोक्षणघर्म्मशान्तिं,
सुच्छायबन्धन-विमर्द्दन-शीततोयम्।
दूर्व्वां तृणं लघु च कोमलमन्यदेव;
यत् किञ्चिदेवमुपयुक्तमिदं वदन्ति॥ ३०॥

भोजेन तु हयलक्षणमन्यथोक्तम्।

तद्यथा,—

स्निग्धाङ्गो लघुतरलोमकस्तु पुच्छो,
दीर्घास्यास्थिनयनकेश पृष्ठवंशः (१)।
रक्तोष्ठः पृथुलनितम्बभारर(व)म्या;
राजार्हो भवति तुरङ्गमः प्रशस्यः॥ ३१॥

---

(१) स्निग्धा......कर्णो पुच्छोदीर्घास्य त्रिनयनकेश पृष्ठवंशः इति (क) पुस्तक पाठ

नाभि(मेरा)मारभ्य देहस्तु द्विधा पूर्व्वापरक्रमात् ।
पूर्व्वकायस्थिता रक्ताः शुभाय हय-संस्थिताः ३२ ॥
अधः काये स्थिता रक्ताः अधमत्व-प्रकाशकाः ।
शक्तीनां वैपरीत्येन प्रशस्त-फलमादिशेत् ॥ ३३ ॥

वात्स्यस्तु ,—

ब्रह्मादि-जादिभेदेन हयजातिश्चतुर्विधा ॥ ३४ ॥

तद्‌यथा,—

ये शुक्लाः सुविमलपुष्पगन्धका वा,
शुद्धाङ्गाः सष्टृणसदृषा भोजिनो वा ।
अक्रुद्धाः समरगता भृशञ्च पुष्टास्ते विप्राः ;
क्षितिपति-वाहनेऽति योग्याः ॥ ३५ ॥
ये रक्ताः सद्‌गुरुगन्धयोऽहता वा,
संहृष्टा बहुतरभोजिनो बलाढ्याः ।
अश्रान्ताः सकलगुणश्रेष्ठाः प्रवीणाः ;
विज्ञेया विधिकरजात-जातयस्ते ॥ ३६ ॥
ये पीताः खलु घृतगन्धयोऽपि ये वा ।
येऽक्रुद्धाः कथमपि गन्धरोषशालिनो ये ॥ ३७ ॥
वद्धा वा बहुतर नाद घोषणा वा विज्ञेया नृपवर वैश्यजातयस्ते ।
ये कृष्णाः सरुधामगन्धयोऽपि ये वा अन्यथा वहुतरताड़नैरपीमे ॥३८॥
क्षीणाङ्गा लघुतनवोऽपि वेगहीनास्ते ।
शूद्राः क्षितिपतिना भृशं विज्ञेयाः ।
एतत्तु एकैकमेव लक्षणं न सामुदायिकम् ॥ ३९ ॥
लक्षणद्वयसम्बन्धात् द्विजातिः स्यात् तुरङ्गमः ।
चतुर्लक्षणयुक्तास्तु दूरे त्याज्यो हयाधमः ॥ ४० ॥

अन्यत्तु ।

सात्त्विका राजसाश्चेति तामसाश्चेति ते हयाः ॥ ४१ ॥

ये शुद्धवर्णा भृशवेगयुक्ता अश्रान्ति-भाजो बहुभोगिनश्च ।

अक्रोधशीलाः समरेऽतिहृष्टास्ते सात्त्विका भूप तुरङ्गमाः स्युः ॥४२॥

ये रक्तवर्णा गुरुवेगरोषाः कषातिघातं (१) न हि ये सहन्ते ।

येऽमी बलाढ्याः खलु दीर्घदेहास्ते राजसा भूप तुरङ्गमाः स्युः ॥४३॥

ये कृष्णवर्णास्तनुरोषवेगा अल्पाशिनो लक्षणलक्षिताश्च ।

ये दुर्ब्बलाः सर्व्वगुणैर्विहीनास्ते तामसा भूप तुरङ्गमाऽधमाः ॥४४॥

द्वयोर्लक्षण सम्बन्धात् द्विगुणो वाजिमध्यमः ।

त्रयाणां गुणसम्बन्धात् त्रिगुणो वाजिनिन्दितः ॥ ४५ ॥

पराशरसंहितायान्तु,—

पृथिवि-वायुतेजःखैः पञ्चभिस्तुरगाश्रितैः ।

उल्वणैः पञ्चधा भेदाः पराशरमता यथा ॥ ४६ ॥

ये स्थूलाः श्रमसहदेहरूपभाज-

श्चाक्रान्ता बहुतर भोजनाश्च दीर्घाः ।

अक्रुद्धाः समरगतास्तु रोषभाजो ;

भीमास्ते घनगुरुघर्घरस्वरास्तु ॥ ४७ ॥

ये श्लथाङ्गास्तनुबलाः श्रमसह कलेवराः ।

अक्रोधवेगाः स स्वप्ना(ङ्गा) आप्यास्ते तुरगाधमाः ॥ ४८ ॥

ये वातवेग-प्रतिमोग्रवेगाः शुष्का भृशं दीर्घकलेवराश्च ।

अश्रान्तिभाजो बहुदूरगाश्च ते वायवा वाजिवराः प्रदिष्टाः ॥ ४९ ॥

ये क्रोधशीला भृशवेगयुक्ताः,

मुक्ता दिनात् क्रोशशतं व्रजन्ति।

---

(१) कलाभिघातं इति (क) पुस्तक पाठः ।

ते तैजसाः पुण्यवतां प्रदेशे ;
भवन्ति पुण्यैरपि ते मिलन्ति ॥ ५० ॥
एको यदा तैजससंज्ञकोऽश्वः,
किं कार्य्यमन्यैस्तुरगाधमैस्तु ।
शुद्धं यदा हीरकखण्डमेकं ;
किं कार्य्यमन्यैर्मणिभिर्विचित्रैः ॥ ५१ ॥

उत्प्लुत्य ये वाजिवरा व्रजन्ति क्रुद्धा भृशं वेगसमन्विताश्च ।
ये लङ्घयन्तः परिखामपारां ते गागनाः पुण्यतमाः प्रदिष्टाः ॥ ५२ ॥

द्वयोर्लक्षणसम्बन्धात् तुरगः स्याद् द्विभौतिकः ।
स्वजातिगुणभूतानां हयानां वाहनं शुभम् ॥ ५२ ॥
असज्जातिगुणादीनां वाहनं क्लेशकारिणम् ।
एषां चिकित्सा न प्रोक्ता ग्रन्थविस्तार-सम्भवात् ॥ ५४ ॥
शालिहोत्रादिविज्ञानात् तद्विज्ञेयं यथोत्तरम् ।
असम्भवे (१) हि दुष्टाश्वं वाहयेदिति चेत् तदा ॥ ५५ ॥
तिलं सकाञ्चनं दद्याल्लवणं वा गुडान्वितम् ।
रेवन्तं (२) पूजयेद्वापि निजं निर्म्मन्थयेत् तदा ।
दद्यात् ताम्रपलं वापि अभावे सर्व्वकर्म्मणः ॥ ५६ ॥

एवमन्यत्रापि ।

काञ्चनं रजतं ताम्रं लौहमेतद् यथाक्रमम् ।
ब्रह्मादि-जातिदोषाणां देयमेतत्प्रशान्तये ॥ ५७ ॥
अभावेऽपि च सर्व्वेषां ताम्रेण स्यात् प्रतिक्रिया ॥ ५८ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ हय-परीक्षा (*) ॥ ० ॥

---

(१) असम्भवेति इति (क) पुस्तक पाठः ।

(२) वेमन्थं इति (ख) पुस्तक पाठः ।

---

* तुरगतत्त्वं सर्व्वं शालिहोत्रीये, श्रीमज्जयन्त-नकुल-रचिताश्ववैद्यकेऽनुसन्धेयम् ।

# अथ गज परीक्षा।

## तत्रकालः।

ऐन्द्रमित्रवरुणानिल पुष्याचन्द्रतोयरवि वारिजतारे।
सूर्य्य-शुक्र गुरु सोमजवारे (१) श्रेयसे भवति कुञ्जरयानम् ॥५९॥

लग्ने चरे शुभसमाश्रित वीक्षिते वा.
चन्द्रस्य दृष्टिरिभ-यानविधौ विरुद्धा।
सौम्ये दिने करनिशाटवसुश्रवण्यतोयेश-
मैत्र (२) मदितिश्च शुभग्रहाहः ॥ ६० ॥

स्यात्कुञ्जरक्रयणदर्शनदानकालः
शेषेषु दुःखःफलमार्कसुतेऽह्नि (३) चैव।
गजानामष्टधा भेदः संक्षेपेण प्रकाश्यते।
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥ ६१ ॥
पुष्पदन्तः सार्व्वभौमः सुप्रतीकश्च दिग्गजाः।
एषां वंशप्रसूतत्वात्(तादृा) गजानामष्टजातयः ॥ ६२ ॥

ये कुञ्जराः पाण्डुरसर्व्वदेहाः सुदीर्घदन्ताः सितपुष्पदन्ताः।
आलोमशा अल्पभुजो वलाढ्यां महाप्रमाणा लघुपुष्टलिङ्गाः ॥६३॥
क्रुद्धाः समीके मृदवोऽन्यकाले नद्यम्बुपाना (४) बहुलोग्रदानाः।
विस्तीर्णदानास्तनुलोमपुच्छा ऐरावतस्याभिजनप्रसूताः ॥ ६४ ॥

---

(१) सौम्यवासरे इति (क) पुस्तक पाठः।

(२) साभेदिनकरनिशाटवसुश्रवण्यतोशेष मेद्र इति (ख) पुस्तक पाठः।

(३) सुताह्नि चैव इति (ग) पुस्तक पाठः।

(४) लघूम्बुपाना इति (घ) पुस्तक पाठः।

तेष्वेव सर्व्वेषु विशुद्धवर्णा अतीव वृत्ताः प्रभवन्ति मुक्ताः ।
नाल्पेन पुण्येन महीपतीनां स्पृशन्ति भूमण्डलमध्यमेते ॥ ६५ ॥
दन्ता विभग्ना अपि युद्धरङ्गे पुनः प्ररोहन्ति पुरैव तेषाम् ।
ये कुञ्जराः कोमलसर्व्वदेहाः पुच्छा न दण्डाः खरग(द)ण्डदेशाः ॥ ६६ ॥
स्रवन्मदाः सन्ततरोषभाजोऽमर प्रियाःसर्व्वभुजो वलाढ्याः ।
सुतीक्ष्णदन्ता रसना गकानां ते पुण्डरीक प्रवरप्रसूताः ।
ते पद्मगन्धं विसृजन्ति रेतो दानञ्च नैषां वमथुः प्रभूता ॥ ६७ ॥
नतोयपानेऽभ्यधिका स्पृहाच श्रमेऽपि नैते वलमुत्सृजन्ति ।
अमी तु येषां निवसन्ति राज्ञां ते वै समस्तक्षितिशासनार्हाः ॥ ६८ ॥
ये कुञ्जराः कर्कशखर्व्वदेहाः कदापि माद्यन्ति गलन्मदाश्च ।
आहार योगाद्वलवीर्य्यभाजो नात्यम्बुकामा वहुलोमगण्डाः ।
विरूपदन्तास्तनुपुच्छकर्णा ज्ञेया वुधैर्वामनवंशजाताः ॥ ६९ ॥
ये दीर्घदेहास्तनुदीर्घशुण्डाः कुदन्तभाजो मलपूर्ण देहाः ।
स्थविष्टगण्डाः कलहप्रियाश्च ते कुञ्जराः स्युः कुमुदस्य वंशाः ।
अन्यद्विपान् दर्शनमात्रतस्तु निघ्नन्ति ते दुर्गमनाश्च पुंसाम् ॥ ७० ॥
ये स्निग्धदेहाः सलिलाभिलाषा महाप्रमाणास्तनुशुण्डदन्ताः ।
स्थविष्ठदन्ताः श्रमदुःसहाश्च ते कुञ्जराश्चाञ्जनवंशजाताः ॥ ७१ ॥
रेतश्च दानञ्च सृजन्ति शश्वदानूपदेशे प्रभवन्ति ये तु ।
ते पुष्पदन्ताभि(ति)जनप्रसूता महाजवास्ते तनुपुच्छभागाः ॥ ७२ ॥
सुदीर्घदन्ता वहुलोमभाजो महाप्रमाणाश्च सुकर्कशाङ्गाः ।
श्राम्यन्तिनाध्वभ्रमणाभियोगान्नाहारपानादिषु चातिशक्ताः ॥७३॥
मरुप्रदेशे विचरन्ति ते वै मुक्ताफलानामिह जन्ममध्ये ।
महाशरीरातिसुकर्कशाङ्गा नारिष्टदन्ता मृदुशुक्लदन्ताः ॥ ७४ ॥

महाशनाः क्षीणपुरीष मूत्र-
विस्तीर्ण कर्णास्तनुरोमगण्डाः ।

ते सार्व्वभौमाभिजनप्रसूता
विशुद्धमुक्ताः प्रभवन्ति (१) चैषु ॥ ७५ ॥

ये दीर्घशुण्डाः सुविभक्तदेहा महाजवाः क्रोधपरीतकाश्च ।
विस्तब्ध कर्णास्तनुपुच्छदन्ताः सदाशनाश्चैव वशा(सा)प्रियाश्च ॥ ७६ ॥
प्रवृद्धगण्डास्तनुलोमयुक्ताः ते सुप्रतीकप्रवरप्रसूताः (२) ।
महाप्रमाणामितमौक्तिकानि भवन्ति चैतन्निजगाद काप्यः ॥ ७७ ॥

एकजातिः समुत्पन्नो गजः स्तब्ध इति स्मृतः ।
लक्षणश्च यथा प्रोक्तं शुद्धश्चेत्यत्र दृश्यते ॥ ७८ ॥
शुद्धद्विजाति सम्भूतस्तल्लक्षण समन्वितः ।
जारजो नाम विख्यातो यथास्वं वलवीर्य्यवान् ॥ ७९ ॥
द्विजातिद्वयजातो यः (३) स शूर इति कथ्यते ।
द्विजाति जारजोत्पन्न उद्दान्त इति कथ्यते ॥ ८० ॥
एवं संयोगभेदेन गजजातिरनेकधा ।
तां यो जानाति तत्त्वेन स राज्ञः पात्रमर्हति ॥ ८१ ॥
ब्रह्मादिजातिभेदेन तेषां भेदश्चतुर्व्विधः ।
विशालाङ्गाः पवित्राश्च ब्राह्मणाः स्वल्पभोजिनः ।
शूरा(ला) विशाला वह्वाशाः क्रुद्धाः क्षत्रियजातयः ॥ ८२ ॥

अथ गुणाः ।

यथा रत्नं यथा खड्गो यथा स्त्री सप्तयो यथा ।
परीक्ष्यन्ते गुणैरेवं गजानामपि निर्णयः ॥ ८३ ॥
रम्यो भीमो (४) ध्वजोऽधीरो वीरः शूरोऽष्टमङ्गलः ।

---

(१) प्रवदन्ति इति (क) पुस्तकपाठः ।
(२) तेज स्वयुक्ता प्रवरप्रसूताः इति (ख) पुस्तक पाठः ।
(३) द्वयैसम्भूताः इति (ग) पुस्तक पाठः ।
(४) वीरो इति (घ) पुस्तक पाठः ।

सुनन्दः सर्व्वतो भद्रः स्थिरो गम्भीरवेध्यपि।
वरारोह इति प्रोक्ता गजा द्वादश सत्तमाः॥ ८४॥

तद्‌यथाह भोजः।

विभक्तावयवः पुष्टः सुदन्तः सुमहानपि।
तेजस्वी रम्य इत्युक्तो गजः सम्पत्तिवर्द्धकः॥ ८५॥
अङ्कुशादि-प्रहारेण यस्य भीतिर्न जायते।
स भीमोऽयं गजः शुक्तो राज्ञः सर्व्वार्थ-साधनः॥ ८६॥
शुण्डाग्रात् पुच्छपर्य्यन्तं रेखा यस्यैव दृश्यते।
ध्वजः शुक्तो गजो नाम साम्राज्य प्राणदायकः॥ ८७॥
समौ कुम्भौ खराकारौ आवर्त्तौ तत्र चोच्छ्रयौ (१)।
अधीरोऽयं गजो नाम्ना राज्ञां विप्रविनाशनः॥ ८८॥
आवर्त्तः पृष्ठतो यस्य स्तनाभिमभिविन्दति।
पुष्टाङ्गो बलवान् वीरो राज्ञामभिमतप्रदः॥ ८९॥
महाप्रमाणः पुष्टाङ्गः सुदन्तश्चारुगण्डकः।
भक्षणे भक्षणे श्रान्तः शूरो लक्ष्मी-विवर्द्धनः॥ ९०॥
सितौ दन्तौ सितः पुच्छः सिता रेखा सिता नखाः।
रक्तकुम्भाक्षिवीर्य्याङ्गैर्विज्ञेयः सोऽष्टमङ्गलः॥ ९१॥
अयं गजेन्द्रो यस्यास्ते तस्य स्यात् सकला मही।
नारिष्टानीतयस्तत्र यत्रास्तेऽयं गजेश्वरः॥ ९२॥
आयोजनशतं यावदनर्थं कुरुते क्षयम्।
नाल्पपुण्यैरयं प्राप्यो मनुजेन्द्रैः कलौ युगे॥ ९३॥
शुभौ दन्तौ शुभः शुण्डः शुभौ कुम्भौ शुभस्तनुः।
ग(म)ण्डयोर्गण्डयोर्मध्ये आवर्त्तः शुभलक्षणः॥ ९४॥

(१) चोन्नतौ इति (क) पुस्तक पाठः।

ललाटमध्ये यस्यैव दृश्यते येन भूभुजा।
... ... ... ... ... ततो मुणीन्द्राः * ॥ ९५ ॥

शश्वन्मदस्रुति-परिप्लुतगण्डदेशा,-
स्तीक्ष्णाङ्कुशेन विनिवारयितुं न शक्याः।
शातिद्विषो नवपयोद(ध)रवा गभीराः;
पृथ्वीभुजां सकलसौख्यकरा भवन्ति ॥ ९६ ॥

अथ दोषाः।

दीनःक्षीणोऽथ विषमो विरूपो विकलः खरः।
विमदो धापकः काको धूम्रो जटिल इत्यपि ॥ ९७ ॥
अजिनो मण्डली श्वित्री हतावर्त्तो महाभयः।
राष्ट्रहा मुषली भाली निःसत्त्व (१) इति विंशतिः ॥
महादोषाः समाख्याता गजानां भोजभूभुजा ॥ ९८ ॥

तद्यथा।

अतिक्षीणतरः क्षीणतनुदन्तोऽतिनिष्प्रभः।
दीनाख्यः कुरुते दीनं भूभुजं नात्र संशयः ॥ ९९ ॥
खर्व्वशुण्डो महापुच्छो निश्वासो वेगवर्ज्जितः।
क्षीणोऽयं कुरुते क्षीणं स्वामिनं धनसम्पदा ॥ १०० ॥
कुम्भे दन्तेऽक्षिकर्णे च वैषम्यं पार्श्वयोस्तथा।
यस्यायं विषमो नागो नागवत् कुरुते क्षयम् ॥ १ ॥
आस्कन्धात् तु शिरः क्षीणं पश्चाद्भागस्य पुष्टता।
विरूप इति नागोऽयं कुरुते भूधनक्षयम् ॥ २ ॥
नानाभोगैरपि कृतैर्यस्य नो जायते मदः।
युद्धाय नोपक्रमते विकलं तं विवर्ज्जयेत् ॥ ३ ॥

---

(१) निषिद्ध इति (क) पुस्तक पाठः।

---

* अत्र ग्रन्थांशः किञ्चित् पतित इति मन्ये ।

खरता सहजा यस्य शरीरेऽस्मीति लक्ष्यते ।
तनुदन्तकरो हस्ती खरः कुलविनाशनः ॥ ४ ॥
नजायते मदो यस्य स्वकाले जायतेऽथवा ।
विरूपो विवशो वापि विमदं दूरतस्त्यजेत् ॥ ५ ॥
लघु प्रमाणः क्षीणाङ्गस्तनुशुण्ड शिरोदरः ।
अश्रान्तं श्वसिति (१) व्यग्रः पतेद्दैनेत्रयोर्मलम् ॥ ६ ॥
त्रिके पुच्छाग्रतो वापि आवर्त्तो मण्डलोऽथवा ।
वहिः (ह्निः) प्रकुरुते लिङ्गं सर्व्वथा गतचेष्टवत् ॥ ७ ॥
भूभुजा नहि वीक्ष्योऽयं श्वापकाख्यो गजाधमः ।
यदीच्छेच्छाश्वतीं भूतिं शरीरारोग्यमेव वा ॥ ८ ॥
शङ्खदेशौ यस्य भग्नौ स्कन्धदेशोऽति गुच्छकः (२) ।
काकोऽयं कुरुते मृत्युं स्वामिनो नात्र संशयः ॥ ९ ॥
विषमौ शङ्खगौ दन्तौ यस्य शुण्डविरोधिनौ ।
भिद्यते वा विदीर्य्येतां स्वयं शून्यान्तरावुभौ ॥
कुरुते व्याधितं नाथं धूम्रनामा गजाधमः ॥ १० ॥
मूर्द्धजाः कर्कशा रूक्षा जटारूपानुवन्धिनः ।
यस्यायं जटिलो नागः कुरुते धनसंक्षयम् ॥ ११ ॥
स्कन्धे वा गात्रदेशे वा लग्नं चर्म्मेऽवलक्ष्यते ।
अजिनो नाम नागोऽयं कुरुते भूधनक्षयम् ॥ १२ ॥
नैनं स्पृशेन्न वीक्षेत यदीच्छेदात्मनः श्रियम् ।
मण्डलानि प्रदृश्यन्ते एकं द्वे वा वहूनि वा ॥ १३ ॥

---

(१) श्वसितं इति (क) पुस्तक पाठः ।
(२) तुच्छकः इति (ख) पुस्तक पाठः ।

विरूपाण्युन्नतानीव मण्डली कुलनाशनः ।
तानि श्वेतानि यस्य स्युः श्वित्री स धननाशनः ॥ १४ ॥
हृदये उदरे चैव त्रिके पुच्छस्य मूलतः ।
गुदे मेढ्रे पदे चैव आवर्त्तेन हृतश्रियम् ॥ १५ ॥
योगिनं कुरुते भूपं प्रवासिनमुपप्लुतम् (१) ।
गच्छतो यस्य गुल्फाभ्यां भवेत् संघर्षणं मुहुः ।
अपि सर्व्वगुणैर्युक्तास्त्याज्यश्च स महाभयः ॥ १६ ॥
राष्ट्रं धनं कुलं सैन्यं मैत्रं दारान् तथा प्रजाः ।
क्षपयत्य शुभो नागो दृष्टमात्रो न संशयः ॥ १७ ॥
तत्रापक्रियते लोकस्तत्र वज्रभयं भवेत् ।
व्याधि वह्निभयं वात्र यत्रास्ते स महाभयः ॥ १८ ॥
भृशं सन्ताड्यमानस्तु पादैकं यो न गच्छति ।
पृष्ठोदरं समावृत्य रेखा रक्तसमा यदि ॥ १९ ॥
न्यस्ताग्रिमपद स्थाने पश्चात् पातः पदे यदि ।
अपि सर्व्वगुणैर्युक्तो राष्ट्रहायं गजाधमः ॥ २० ॥
राष्ट्रादपाक्रियतेऽयं भूभुजा श्रियमिच्छता ।
राष्ट्रान्ते रक्षितो मोहात् कुरुते राष्ट्रसंक्षयम् ॥ २१ ॥
पादाश्चात्यन्तविषमा दन्तौ चान्योन्य विषमौ ।
पञ्जरो दृश्यते भग्न एको वाष्टौ (२) द्वयोऽथवा ॥ २२ ॥
दन्तौ वा चलतौ यस्य किं युवान (३) प्ररोहतः ।
कुम्भौ वा विषदौ यस्य मुषलौ स गजाधमः ॥ २३ ॥

---

(१) प्र ुतम् इति (क) पुस्तक पाठः ।

(२) राष्ट्री इति (ख) पुस्तकपाठः ।

(३) किमु वान इति (ग) पुस्तक पाठः ।

राष्ट्रदुर्गं (१) बलामात्य-क्षयकृत् तं परित्यजेत् ।
चर्म्मखण्ड इवाभाति भाले यस्यातिकर्कशः ॥ २४ ॥
भालो स कुरुते नागो भर्त्तुः कुलधनक्षयम् ।
पुष्टो विशालः सहन्तः सत्कारोऽपि शुभोऽपि सन् ॥
न रणे साहसो यस्य स निःसत्त्वो गजाधमः ॥ २५ ॥
सर्व्वेषां गजदोषाणामुक्त एव महानयम् ।
येनैकेन गुणाः सर्व्वे नश्यन्ते सुनिश्चितम् ॥ २६ ॥

पालकाप्यस्तु * ।

क्षीणदन्ताङ्ग शुण्डत्वं विषमत्वं रदादिषु ।
शिरः क्षीणमधः पुष्टिरेते दोषा गजे मताः ॥ २७ ॥

गार्ग्यस्तु ।

ये कुञ्जरास्तनुरदास्तनुगण्डशुण्डाः,
क्षीणाः सुदीनवपुषो गुरु दीर्घपुच्छाः ।
वश्यादिभिः खलु गुणैरहितो हिताय ;
ते भूभुजामभिमता न हि वीक्षणीयाः ॥ २८ ॥
यो न स्रवेन्मदजलं तनुमूर्द्धभागो,
निर्वीर्य्यतामुपगतो बहुभोजनेऽपि ।
नेच्छत्यसावुपगतानपरान् निहन्तुं ;
भूमीभुजा नहि गजोऽयमवेक्षणीयः ॥ २९ ॥
दोषैर्दुष्टान् गजान् राजा न वीक्षेत कदाचन ।
न्यसेद्वा परराष्ट्रेषु नगरात् क्रियते वहिः ॥ ३० ॥

---

(१) राष्ट्रदुर्द्दहला (क) पुस्तक पाठः ।

---

* पालकाप्यर्षिविरचित हस्त्यायुर्व्वेदः द्रष्टव्यः ।

दद्यात् द्विजेभ्यः शुद्धेभ्यो गणकायाथवा नृपः ।
दृष्ट्वा यदि गजान् दुष्टान् दद्याच्छृङ्गिशतं द्विजे ॥ ३१ ॥
पुरं नीराजयेद्वापि आत्मानं वाथवा सुतम् ।
देवीसूक्तेन † जुहुयादयुतं वाति(पि) तत्परः ॥ ३२ ॥
तिलान् वा जुहुयादग्नौ तत्प्रतीकार हेतवे ।
ब्रह्मादि जातिभेदेन जातिरुक्ता चतुर्व्विधा ॥ ३३ ॥
चतुर्व्विधानां भूपानां वाहने ते शुभप्रदाः ।
ये दोषा दोषवत्त्वानां त एव स्युः स्वजातितः ॥ ३४ ॥
ये व्याधयो नराणां स्युस्ते गजानामपि स्मृताः ।
चिकित्सापि तथा तेषां मात्राचैव गरीयसी ॥ ३५ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ गज परीक्षा * ।

—*—

## अथ वृषपरीक्षा ।

अश्वेभलक्षणे ह्युक्ता वक्ष्यन्तेऽन्ये चतुष्पदाः ।
गावः कृतयुगे सृष्टाः स्वयमेव सयम्भुवा ॥ ३६ ॥
ब्रह्म-क्षत्रिय-विट्-शूद्र जातिभेदाश्चतुर्व्विधाः ।
शुक्लाङ्गाः शुचयोऽक्रुद्धा मृदवः शुद्धचेतसः ॥ ३७ ॥
अल्पाग्निनो बहुवला वृषभा ब्रह्मजातयः ।
द्वयोर्लक्षण सम्बन्धात् त्रिगुणः स वृषाधमः ॥ ३८ ॥
त्रिलक्षण समावेशात् त्रिगुणः स वृषाधमः ।
पीताङ्गा मृदवः शुद्धा अक्रोधा भारवाहिनः ॥ ३९ ॥

---

† यद्रुद्रेभिरित्यादिना वेदोक्तेन इति ।

* गजविषयं, वह्निपुराण गरुड़पुराण-कालिकापुराण-वसन्तराज शाकुनानि द्रष्टव्यानि ।

यदृच्छा भोजिनः क्षीणा वृषभा वैश्यजातयः ।
कृष्णाङ्गाः क्रूरहृदया अपवित्राः सदाशिनः ॥ ४० ॥
वृहद्वृषणरोषाश्च (१) वृषभाः शूद्रजातयः ।
द्वयोर्लक्षणसम्पर्कात् द्विजातिर्वृषभो भवेत् ॥ ४१ ॥
वात्स्यस्तु,—
पृथ्वीतले समुत्पन्ना गजाश्वा ये चतुष्पदाः ।
गुणत्रयविभेदेन तेषां भेदत्रयं भवेत् ॥ ४२ ॥
एतन्मतानुसारेण भोजः प्राह महीपतिः ।
ये शुक्लाः शुचयः शुद्धा भृशं भारवहा अपि ॥ ४३ ॥
वह्वाशिनः स्वल्परोषास्ते वृषाः सात्त्विका मताः ।
व्यक्ताव्यक्तरुषः(षाः) शुद्धा दृढ़ा भारवहाः शुभाः ॥ ४४ ॥
वह्वाशिनो वहुवलास्ते वृषा राजसा मताः ।
विवर्णा विकृताङ्गाश्च निर्व्वलाः स्वल्पभोजिनः ॥ ४५ ॥
अपवित्रा वृहद्रोषास्ते वृषास्तामसा मताः ।
लक्षणद्वयसम्बन्धात् द्विगुणो वृषभो भवेत् ।
त्रिलक्षणसमावेशात् त्रिगुणः स वृषाधमः ॥ ४६ ॥

## अथ गुणाः ।

नीलः शुभो ध्वजो वामः क्षेमो भद्रः शिवः स्थिरः ।
भोजदेवेन लिखिता इत्यष्टौ वृषभा गुणाः ॥ ४७ ॥
तद्यथा,—
श्वेतादन्यतरो वर्णः श्वेतः खुरविषाणयोः ।
ललाटपुच्छयोः श्वेतः स नीलः शुभमावहेत् ॥ ४८ ॥
यो हृष्टपुष्टो रम्यात्मा सुविभक्ततनुः शुभः ।

---

(१) वृहद्दृषणरोषाश्च इति (क) पुस्तक पाठः ।

कुरुते धनवृद्धिं स दोषैर्मुक्तो यदा त्वयम् ॥ ४९ ॥
वर्णस्तु (१) सहजः पुच्छो रम्यश्च ध्वज उच्यते ।
भर्त्तुः कुलं धनं धान्यं विवर्द्धयति निश्चयम् ॥ ५० ॥
पूर्व्वार्द्धे चोन्नतो यस्तु परार्द्धे चैव नीचकः ।
निर्द्दोषो वाम इत्येष कुरुते रिपुसङ्क्षयम् ॥ ५१ ॥
चन्द्रकं दृश्यते यस्य ललाटे देवनिर्म्मितम् ।
क्षेमनामा वृषः कुर्य्यात् धनधान्यविवर्द्धनम् ॥ ५२ ॥
आवर्त्ताश्च शुभा यस्य शुक्तयश्चापि वा शुभाः ।
भद्रनामा वृषः कुर्य्यात् भर्त्तुः सर्व्वार्थ-साधनम् ॥ ५३ ॥
आवर्त्त शुक्तिविज्ञानं हयेषु वृषभेष्वपि ।
पादाः सर्व्वे सिता यस्य पुच्छभालौ सितौ तथा ॥ ५४ ॥
महोच्चा चायते नेत्रे कर्णौ चाति लघू स्थिरौ ।
मुष्कयोः कृष्णता चैव शृङ्गे चातिशुभे दृढ़े ॥ ५५ ॥
तनुरोमा (२) महावेगः स्निग्धगम्भीर निस्वनः ।
शिव इत्येष कथितः शिवं प्रकुरुते ध्रुवम् ॥ ५६ ॥
चरणाः पञ्जराः स्थूलाः शिरः शुभ्रं भवेत्तनुः ।
आपुच्छादायता शुभ्रा रेखा मस्तकगामिनी ॥ ५७ ॥
रक्तताल्वोष्ठजिह्वस्तु स्थिरः स्थैर्य्यकरः श्रियाः ।
नाल्पपुण्येन लभ्योऽयं वृषभः शुभलक्षणः ॥ ५८ ॥
गर्गस्तु,—
महत्त्वं तनुलोमत्वं पुष्टता भारवाहिता (३) ।
कुमारकत्वमित्येते वृषभाणां गुणा मताः ॥ ५९ ॥

---

(१) षण्डस्तु रम्यः सध्वज इति (क) पुस्तकपाठः ।
(२) तानुरोमाः इति (ख) पुस्तकपाठः ।
(३) वारवाहिता इति (ग) पुस्तकपाठः ।

## अथ वृषभदोषाः ।

व्यङ्गो विवर्णो विषमः श्वित्री धूम्रश्चल खरः ।
एते सप्त महादोषा वृषभाणामुदीरिताः ॥ ६० ॥
विषाणौ विषमौ यस्य खुराश्च विषमास्तथा ।
नेत्रप्रा(क्रा)न्तेऽथ वा गात्रे पञ्जरे वैकृतं भवेत् ॥ ६१ ॥
व्यङ्ग इत्येष कथितो धनधान्य-विनाशकः ।
पूर्व्वार्द्धमन्यवर्णन्तु परार्द्धञ्चान्यवर्णकम् ॥ ६२ ॥
पृष्ठं क्रोड़ो विवर्णो वा विवर्णः कुलनाशनः ।
परार्द्धमुन्नतं यस्य पूर्व्वार्द्धञ्चाति नीचकम् ॥ ६३ ॥
गच्छतश्चरणौ लग्नौ शब्दायेते खरस्वरः (१) ।
विषमो नाम वृषभः सम्पत्तिक्षयकारकः ॥ ६४ ॥
हिमकुन्देन्दुसङ्काशा गात्रेषु लोमविन्दवः ।
श्वित्री नाम महादोषो दूरतस्तं परित्यजेत् ॥ ६५ ॥
शृङ्गाग्रे दीपिकाकारं ज्वलते केकरे दृशौ ।
कपिलः पुच्छभागश्चेत् स धूम्रो मृत्युमावहेत् ॥ ६६ ॥
दन्त शृङ्ग-खुरादीनां यद्येकोऽपि चलेत् स्वयम् ।
मुष्को वा (२) चलते यस्य स चलः कुलनाशनः ॥ ६७ ॥
आवर्त्ताः शुक्तयो रेखा विषमाश्च विसंस्थिताः ।
न्यूनाधिकाः पञ्जरास्तु खुरास्तु विषमास्तथा ॥ ६८ ॥
गुदाम्मेढ्रान्तरे यावद्रेखा व्यक्तेव दृश्यते ।
विस्तृते विषमे घोणे(रे) जिह्वा चैवा(व)सिता भवेत् ॥ ६९ ॥
स खरो दूरतस्त्याज्यो भर्त्तुः सर्व्वार्थ-नाशनः ।
स्वल्पता दीर्घरोमत्वं क्षीणताभारवाहिता ॥ ७० ॥

---

(१) खरः खरः इति (क) पुस्तक पाठः ।
(२) मुष्कौरा इति (ख) पुस्तक पाठः ।

व्यङ्गत्वं मारकत्वञ्च वृषदोषा उदाहृताः ।
ब्रह्मादि-जातिभेदेन चत्वारो ये वृषा मताः ॥ ७१ ॥
चतुर्व्विधानां लोकानां त एव स्युः शुभावहाः ।
यो मोहादन्यजातीयं कुरुते वृषभं नरः ॥ ७२ ॥
तस्य नश्यन्ति वित्तानि धनमायुः कुलं वलम् ।
दुर्वलो वृषभोयत्र गो-जातिस्तत्रनश्यति ॥ ७३ ॥
वातपित्तकफोद्रेकाद् व्याधयो ये वृषे मताः ।
तेषामुपशमः कार्य्यो यथास्वं विधिना बुधैः ॥ ७४ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ वृषपरीक्षा ।

---

## अथ महिष परीक्षा ।

विपक्षे हयसन्त्रासं कुरुते येन हेतुना ।
भारं वहति वा दूरं महिषोऽस्मान्निरूप्यते ।
ब्रह्मक्षत्रियविट्शूद्रान्त्यजभेदेन पञ्चधा ॥ ७५ ॥
तद्यथा ।
भृशं कृष्णाः पवित्राश्च वृहद्वृषण घोणकाः ।
वह्वाशिनो मारकाश्च महिषा ब्रह्मजातयः ॥ ७६ ॥
केकराः कामलाः (१) स्थूला भृशं क्रुद्धाश्च मारकाः ।
वह्वाशिनो बहुवला महिषाः क्षत्रजातयः ॥ ७७ ॥
श्लथाङ्गाः क्षीणशृङ्गाश्च सुक्रुद्धाभारवाहिनः ।
अमारका वहुवला महिषाः वैश्यजातयः ॥ ७८ ॥
क्षीणाः क्षीणवलाः क्षीणशृङ्गघोणारुषश्च (२) ये ।
अल्पाशिनो भारसहा महिषाः शूद्रजातयः ॥ ७९ ॥

---

(१) कपिलां इति (क) पुस्तक पाठः ।
(२) घोणारुषाश्च इति (ख) पुस्तक पाठः ।

सर्व्वदा जलमिच्छन्ति येऽल्पसत्त्वा महौजसः ।
भारसहाः कुशृङ्गाश्च तेऽन्त्यजा महिषा मताः ॥ ८० ॥
एषां दोषा गुणा वापि वृषवल्लक्षयेद्बुधः ।
पोषणञ्चापि संस्थानं वृषतुल्यं तथा मतम् ॥ ८१ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ महिषपरीक्षा ।

---

## अथ मृगपरीक्षा ।

मृगनाभिं समादातुं कौतुकार्थं तथापुनः ।
मृगाःपोष्या महीन्द्राणां तेषां वक्ष्यामि लक्षणम् ॥ ८२ ॥
पृथिव्यव् वायुगगनास्तेजोऽधिकास्तु पञ्चधा ।
भिद्यन्ते नैकभेदास्तु समस्ता मृगजातयः ॥ ८३ ॥

तद्यथा ।

ये गन्धिनः क्षीणशरीरकर्णास्ते पार्थिवा गन्धमृगाः प्रदिष्टाः ।
सर्व्वाङ्गमेषां सुरभि प्रकामं पुण्ये प्रदेशे प्रभवन्ति ते तु ॥ ८४ ॥
ये वै विशाला गुरुदीर्घशृङ्गा अमांसलास्तीव्रखुर प्रदेशाः ।
आप्यास्तु ते वै प्रसरन्तिभूरि सर्व्वत्र देशे प्रभवन्ति चैव ॥ ८५ ॥
धावन्ति ये वातमिवान्तरीक्षे दीर्घास्तु ते वातमृगाः प्रदिष्टाः ।
ते यत्र यत्रैव भवन्ति शक्रास्तत्रैव सर्व्वाणि शुभानि सन्ति ॥८६॥
लघुप्रमाणा लघु वीर्य्यसत्त्वा निर्गन्धदेहाश्छगल-प्रमाणाः ।
ते गागना वेगकरा नराणां स्पृश्या न ते नापि निरीक्षणीयाः ॥८७॥
ये कृष्णवर्णा गुरुदीर्घशृङ्गाः क्रुद्धा भृशं यान्ति च वायुवेगाः(त्) ।
ते कृष्णसाराः खलु तैजसास्तु पुण्यप्रदेशे प्रभवन्ति ते तु ॥ ८८ ॥

भोजोऽप्याह ।

पार्थिवादिर्मृगः सर्व्वश्चतुर्जातिर्भवेत् पृथक् ।
सुश्रृङ्गास्तनुलोमानो ब्राह्मणा मृगजातयः ॥ ८९ ॥
ऋज्वाः पश्वरि (१) शृङ्गाश्च क्षत्रियाः खरलोमशाः ।
आवर्त्त शृङ्गास्तनवो हरिणा वैश्यजातयः ॥ ९० ॥
कुशृङ्गा वाप्यशृङ्गा वा शूद्राः खरतनूरुहाः ।
अश्वानां ये गुणा दोषास्ते ज्ञेया हरिणेष्वपि ॥ ९१ ॥
तथापि दोषाः पश्चामी वच्यन्ते हरिणाश्रयाः ।
नेत्रयोरन्तरे यस्य लोमावर्त्ताः स पापकृत् ॥ ९२ ॥
विषमौ विकृतौ शृङ्गौ यस्य स क्षेमनाशनः ।
आवर्त्तः पृष्ठतो यस्य आनाभि-मभिविन्दति ॥ ९३ ॥
पश्चार्द्धे यस्य वावर्त्तस्तौ त्याज्यौ भयकारकौ ।
वर्णनेत्रपदादीनां वैकृताद्धन-नाशनः ॥ ९४ ॥

गार्ग्यः ।

दोषवन् मृगजातीनां विजातीनामथापि वा ।
दर्शनात् स्पर्शनात् चैव गन्धादानाच्च पोषणात् ।
भवेयुर्विपदः सर्व्वास्तथा चैवाद्य पोषणात् ॥ ९५ ॥

शम्भोऽपि ।

हरिणपोषणतो धरणीभुजांनहि भवेन्मरुद्भव-पीड़नम् ।
न परिवर्ध्विरजोरिपुजं भयं तदव तं हरिणं गुणिनं नृप ॥९६॥

इति श्रीभोजराजीये युक्तिकल्पतरौ मृगपरीक्षा ।

---

(१) पश्चुरि इति (क) पुस्तक पाठः ।

# अथ सारमेय परीक्षा।

मृगयार्थं शाकुनार्थं कौतुकार्थि-महीक्षिता (१)।
श्वानः पोष्यास्ततस्तेषामत्र वक्ष्यामि लक्षणम्॥
गुणजाति प्रभेदेन शुनां भेदो ह्यनेकधा॥ ९७॥

तद्‌यथा।

सात्त्विका राजसाश्चैव तामसाश्च त्रिधा मताः।
अश्रान्ता अपरिक्षीणाः पवित्राः स्वल्पभोजिनः॥ ९८॥
श्वानस्ते सात्त्विकाः प्रोक्ता दृश्यन्ते च क्वचित् क्वचित्।
क्रुद्धा वहुभुजो दीर्घा गुरु वक्षस्तनूदराः॥ ९९॥
जाङ्गलस्था जाङ्गिकाश्च श्वानस्ते राजसा मताः।
अल्पश्रमेण ये श्रान्ता ललज्जिह्वा गुरूदराः॥ १००॥
श्वानस्ते तामसा ज्ञेयाः सन्ध्यावनसमाश्रयाः।
ब्रह्मादि जातिभेदेन चतुर्द्धा सर्व्वं एव हि॥ १॥
शुभ्रा दीर्घाः स्तब्धकर्णा लघुपुच्छास्तनूदराः।
सुशुक्लखरदन्ताश्च श्वानस्ते ब्रह्मजातयः॥ २॥
रक्ताङ्गास्तनुलोमानो ललत्कर्णास्तनूदराः।
दीर्घा दीर्घा नखरदाः श्वानस्ते क्षत्रजातयः॥ ३॥
ये पीतवर्णा मृदवस्तनुलोमान एव च।
क्रुद्धाक्रुद्धा ललज्जिह्वास्ते श्वानो वैश्यजातयः॥ ४॥
कृष्णवर्णास्तनुमुखा दीर्घरोमाण एव च।
अक्रुद्धाः अमयुक्ताश्च ते श्वानः शूद्रजातयः॥ ५॥

---

(१) मृगयार्थं शार्दूथं कौतुकार्थं महीक्षिता इति (क) पुस्तक पाठः।

लघु प्रमाणास्तु गुरूदरा ये
येऽमेध्यभक्षा बहुपुत्रकाश्च ।
प्रहृष्टपुच्छा लघुसूक्ष्म दन्ता-
स्ते चान्त्यजाः कुक्कुरजातयः स्युः ॥ ६ ॥

द्विजाति चिह्नसंसर्गात् द्विजातिः श्वा भयावहः ।
लक्षणत्रयसम्बन्धात् त्रिजातिर्धननाशनः ॥ ७ ॥

भोजोऽपि,—

द्विजातिर्वा त्रिजातिर्वा विजातिः श्वा महीभृताम् ।
भयं धनक्षयं शोकं विदधाति यथाक्रमम् ॥ ८ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ श्वपरीक्षा ।



भरद्वाजस्तु वलिप्रकरणे—

## अजलक्षणमाह ।

तदनुसारेन भोजोऽपि,—

नक्षत्राणां विभेदेन नराणान्तु गणत्रयम् ।
तेषां शुभाय निर्द्दिष्टं पशुवस्तत्रयं (१) वली ॥ ९ ॥

तद्यथा,—

ये कृष्णाः शुचयश्छागाः पशवोऽन्ये तथैव च ।
देवजातिभिरुत्सृज्यास्ते सर्व्वार्थोपसिद्धये ॥ १० ॥
ये पीता हरिता वापि नरजातेरुदोरिताः ।
ये शुक्लाश्च महान्तो वा रक्षोजातेः शुभप्रदाः ॥ ११ ॥

---

(१) पशुवस्तुत्रयं इति (क) पुस्तक पाठः ।

यो मोहादथवाज्ञानाद्बलिमन्यं प्रयच्छति ।
वध एव फलं तस्य नान्यत् किञ्चित् फलं भवेत् ॥ १२ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ अजादि लक्षणम् ।



## अथ चतुष्पदयानोद्देशः ।

ये अश्वजात्यादि विभेदतोऽमी,
मया निरुक्ता इह वाजिमुख्याः ।
दिशानया सर्व्वचतुष्पदानां ;
भेदो विधेयो विदुषादरेण ॥ १३ ॥
यथा यथाश्वादिकपोषणेन,
यानेन वा दोष गुणौ भवेताम् ।
तथा तथैवान्य चतुष्पदानां ;
प्रकीर्त्तितौ दोषगुणौ बुधेन ॥ १४ ॥

वरमयानमपोषणमेव वा वरमिवान्य शरीर मपोषणम् ।
नखलु दोषयुतं चतुष्पदं स्पृशति पश्यति शोभनचेतनः ॥१५॥
सुराविन्दुर्दूषयति (१) पयोघटशतं यथा ।
तथा सर्व्वं दूषयति दोष दुष्टश्चतुष्पदः ॥ १६ ॥

इति श्रीभोजराजीये युक्तिकल्पतरौ चतुष्पद यानोद्देशः ।

---

(१) सुराविन्दूर्दौषयति इति (क) पुस्तक पाठः ।

# अथ द्विपदयानोद्देशः ।

मानुषैः पक्षिभिर्वापि तथान्यैर्द्विपदैरपि ।
यानं स्याद्द्विपदं नाम तस्य भेदो ह्यनेकधा ॥ १७ ॥
हंसैर्मयूरैः कङ्कालैरन्यैर्वापि विशेषतः ।
सामान्यञ्च विशेषश्च तस्य भेदो द्विधा भवेत् ॥ १८ ॥

तत्र सामान्यम् ।

यथा,—
यानं यद्द्विपदाभ्यां सत्तद्दोलादि कमुच्यते (१) ।
चतुर्भिर्युक्ति संयुक्तैर्दण्डधातुगुणाम्बरैः ॥
दोलेति कथ्यते तेषां नियमोऽयं प्रदर्श्यते ॥ १९ ॥

तत्र समयः ।

उपेन्द्र मूलाद्रि शिवाग्निवर्ज्जं,
शस्ते न्दुतारा (२) तिथि योगलग्ने ।
विष्टिक्षमापुत्र यमाह्ववर्ज्जं ;
दोलादिकारोहणमाद्यमिष्टम् ॥ २० ॥

दण्डकाष्ठस्य नियमे नियमस्तत्र दण्डवत् ।
कनकं रजतं ताम्रं लौहं धातुचतुष्टयम् ॥ २१ ॥
चतुर्व्विधाना मुद्दिष्टं ब्रह्मादीनां यथाक्रमम्(मात्) ।
सुराणाम (३) सुराणाञ्च चातुर्व्वर्ण्यमुदाहृतम् ॥ २२ ॥

---

(१) यत्तद्‌यानादिकमुच्यते इति (क) पुस्तकपाठः ।
(२) भावा इति इति (ख) पुस्तक पाठः ।
(३) गुणानाम् इति (ग) पुस्तक पाठः ।

त्रिहस्तसम्मितो मध्ये तदर्द्धं पार्श्वयोर्द्वयोः ।
विजयानाम दोलेयं विजयाय महीभुजाम् ॥ २३ ॥
विजया मङ्गला क्रूरा शिवा क्लेशा शुभा क्रमात् ।
वितस्त्येकैकसंवृद्ध्या दोलाः षट् स्युः सुखान्नदाः (१) ॥ २४ ॥
कुम्भश्च पद्मकोषश्च शङ्कुः पर्व्वत एव च ।
चतुर्व्विधानां दोलासु कल्याणाय चतुष्टयम् ॥ २५ ॥
हंसः केकी शुकी भृङ्गश्चतुष्टयमिदं क्रमात् ।
कुम्भाद्यग्रे निधातव्यं चतुर्व्विध महीभुजाम् ॥
अत्रापि वर्त्म(र्ग)विन्यासो विज्ञेयो नवदण्डवत् ॥ २६ ॥

भोजस्तु,—

गजः प्रस्थानदोलायां रणदोलासु(च) केशरी ।
मृगो भ्रमणदोलायां क्रीड़ादोलासु षट्पदः ॥ २७ ॥
भुजङ्गमः शत्रुराज्ये वृषभो दान-कर्म्मणि ।
दोलोपरि (पर्य्यु) परि न्यस्यो बहुभिर्मुनिशासनम् ॥ २८ ॥
यद्वक्रदण्डं यानं स्यात् तत् पर्य्यङ्कमिति स्मृतम् ।
त्रिहस्तसम्मितो यानस्तदर्द्धपरिणाहवान् ॥ २९ ॥
पर्य्यङ्कः क्षेमनामायं भर्त्तुः सर्व्वार्थ-साधकः ।
क्षेमो(मे) मृत्युञ्जयो दुःखश्चत्वारस्ते यथाक्रमम् ॥ ३० ॥
वितस्त्येकैक संवृद्ध्या यथा चाणुर्न सङ्गिनः ।
मणिधातुगुणादीनां नियमः पूर्व्ववन्मतः ॥ ३१ ॥
विशेषमथ वक्ष्यामि पर्य्यङ्कस्य यथाक्रमम् ।
शुक्तिश्च गजदन्तश्च मृगशृङ्गं तथैव च ॥ ३२ ॥

---

(१) यथान्नदाः इति (क) पुस्तक पाठः ।

अनू(न्ट)पादिकजातानां पर्य्यङ्केषु न्यसेत् क्रमात् ।
पद्मशङ्खगजाश्वालिहंसकोकशुकान् (१) क्रमात् ॥३३॥
आदित्यादि दशाजानां मणिरूपेण विन्यसेत् ।
महीन्द्राणां विशेषेण सिंहमानेव शस्यते ॥ ३४ ॥
निर्म्माणे शुक्तिदण्डाश्च राज्यभोगसुखप्रदाः ।
तदेवावक्रदण्डन्तु खट्वायानमिति स्मृतम् ॥ ३५ ॥
अस्यापि पूर्व्ववन्मान मणिधात्वादि-निर्णयः ।
विशेषस्वरणोच्छ्रायः परिणाहार्द्ध-सम्मितः ।
तदेव चेन्निस्वरणं पीठयानमिति स्मृतम् ॥ ३६ ॥
तस्य भेदो द्विधा दण्डवक्रावक्र (२) प्रभेदतः ।
मानादिकं पूर्व्वतुल्यं विशेषाच्चतुरस्रता ॥ ३७ ॥
एवमन्यानि मिश्राणि यानानि विविधानि च ।
सामान्याख्यानि जानीयात् शिल्पिभिर्निर्म्मितानि वै ॥ ३८ ॥
मनोहरत्वं लघुता दृढ़तेति गुणत्रयम् ।
प्रोक्तं द्विपदयानानां सहजं भोजभूभुजा ॥ ३९ ॥
इति श्रीभोजराजीये युक्तिकल्पतरौ द्विपदयानपरीक्षा ।

## अथ विशेष द्विपदयान कथनम् ।

राज्ञो यद्द्विपदं यानं विशेषाख्यमलं विदुः (३) ॥ ४० ॥
तद्यथा ।
चतुर्भिरुह्यते यत्तु चतुर्द्दोलं तदुच्यते ॥ ४१ ॥

---

(१) शुकाः इति (क) पुस्तक पाठः ।

(२) रक्तावक्र इति (ख) पुस्तकपाठः ।

(३) -मतद्विदुः इति (ग) पुस्तक पाठः ।

भोजस्तु,—

चतुर्भिर्वाहकैर्दण्डैः षड्भिः कुम्भैः सुसंस्थितैः।
स्तम्भैरष्टाभिरुदितं चतुर्द्दोलमनुत्तमम् ॥ ४२ ॥
तद्भेदा जयकल्याण वीर-सिंहा यथाक्रमम्।
चतुर्व्विधानां भूपानां चतुर्द्दोलाः प्रकाशिताः ॥ ४३ ॥
त्रिहस्त-सम्मितायामो द्विहस्त परिणाहवान्।
हस्तद्वयोन्नतः प्रोक्तश्चतुर्द्दोलो(लौ) जयाख्यया ॥ ४४ ॥
चतुर्हस्तायतो यस्तु सार्द्धहस्तस्तदन्यथा।
चतुर्द्दोलः समाख्यातः कल्याणस्तावदुन्नतः (१) ॥ ४५ ॥
पञ्चहस्तायतो व(य)स्तु त्रिहस्तपरिणाहवान्।
तावदेवोन्नतो वीर(२)श्चतुर्द्दोल उदाहृतः ॥ ४६ ॥
आयामपरिणाहाभ्यां चतुर्हस्तमितो हि यः।
चतुर्द्दोलो ह्ययं सिंहस्तद्दर्द्धेनोन्नतः शुभः ॥ ४७ ॥
सर्व्वोऽथ द्विविधः प्रोक्तः सच्छदिश्चापि निश्छदिः।
आद्यः समरवर्षासु परः(श्च) केलिघनात्यये ॥ ४८ ॥
सर्व्वेषामेव काष्ठानां दण्डः स्याद्रत्नवारणः।
चन्दनेनैव घटना सर्व्वेषामुपयुज्यते ॥ ४९ ॥
लोमजं सर्व्ववस्त्रेषु (३) कनकं सर्व्वधातुषु।
कुम्भश्च पद्मकोषश्च गिरिश्चेति यथाक्रमम् ॥ ५० ॥
त्रैदेशानां महीन्द्राणां चतुर्द्दोलेषु विन्यसेत्।
दर्पणश्चार्द्धचन्द्रश्च हंसः केकी शुको गजः ॥

---

(१) स्तावद्दुर्ल्लभः इति (क) पुस्तक पाठः।
(२) धीरैः इति (ख) पुस्तक पाठः।
(३) शस्त्रेषु इति (ग) पुस्तक पाठः।

अश्वः सिंहश्च तस्याग्रे आदित्यादि दशोत्तरान् ॥ ५१ ॥

मणि-नियमस्तु दण्डवत् ।

रक्तः शुक्लश्च पीतश्च कृष्णश्चित्रस्तथारुणः ।
नीलः कपिल इत्युक्तः पताकानान्तु संग्रहः ।
चतुर्द्दोलः सपताकः शुभयानमिति स्मृतः ॥ ५२ ॥
मुक्तास्तवकैर्युक्तः शुभिर्युक्तः स्याद्राजकेशानाम् ।
चामरदण्डैर्दशभिर्दिग्जयिनां चतुर्द्दोलः ॥ ५३ ॥
चामरञ्चास्य पुच्छश्चेत् (१) सर्व्वोपरि परिन्यसेत् ।
यात्रासिद्धिरयं नाम्ना चतुर्द्दोलो महीभुजाम् ॥ ५४ ॥

अथ निश्छदिः ।

स्तम्भच्छादरहितो निश्छदिरुक्तश्चतुर्द्दोलः ॥ ५५ ॥

मानं पूर्व्ववत् ।

स पुनर्द्दिविधः प्रोक्तः सध्वजश्चाथ निर्ध्वजः ।
ध्वजान् षडत्र न्यस्यन्ति षड्वर्ग(न्ध) विजयैषिणः ॥ ५६ ॥
तेषां मानन्तु चत्वारः स्वामिहस्तैकसम्मिताः ।
कोणेषु पश्चादग्रे च हस्तद्वयमितौ ध्वजौ ॥ ५७ ॥
सुवर्णं रजतं युग्मं त्रिविधानां महीभुजाम् ।
मणिचामरकुम्भाणां खड्गादीनां विनिश्चयः ॥ ५८ ॥
चतुर्द्दोलध्वजौ राज्ञां विज्ञेयौ नवदण्डवत् ।
निर्ध्वजे च चतुर्द्दोले मानमन्यतमं शृणु ॥ ५९ ॥
आयामपरिणाहाभ्यां चतुर्हस्तमितो हि यः ।
विजयो नाम विख्यातश्चतुर्द्दोलो महीभुजाम् ॥ ६० ॥

---

(१) चामरञ्चास्य पुच्छश्चेत् इति (क) पुस्तक पाठः ।

विजयो मङ्गलो भव्यो वितर्स्त्येकैकवर्द्धितः ।
त्रिविधानां महीन्द्राणां यानत्रयमुदाहृतम् ॥ ६१ ॥
अष्टाभिरुह्यते यस्तु अष्टदोलमुशन्ति(तं) च ।
सोपानद्वितयश्चात्र विज्ञेयं शिल्पि-निर्म्मितम् ॥ ६२ ॥
भोजस्तु,—
अष्टाभिर्वाहकैर्दण्डैः षड्भिस्तु दशभिर्घटैः ।
स्तम्भैस्तु दशभिर्ज्ञेयमष्टदोलं महीभुजाम् ॥ ६३ ॥
तद्भेदा जयकल्याणवीरसिंहा यथाक्रमम् ।
चतुर्व्विधानां भूपानां अष्टदोलाः प्रकाशिताः ॥ ६४ ॥
षड्भिर्हस्तैर्मितायामः परिणाहश्चतुर्भुजः ।
चतुर्हस्तोन्नतो राज्ञामष्टदोलं जयं विदुः (१) ॥ ६५ ॥
आयामपरिणाहाभ्यां पञ्चहस्तमितो हि यः ।
कल्याणाख्योऽष्टदोलोऽयं (२) चतुर्हस्तमितोन्नतिः ॥ ६६ ॥
सप्तहस्तायतः कार्य्यं प्रवरे पञ्चहस्तकः ।
पञ्चहस्तोन्नतो वीरश्चाष्टदोलो महीभुजाम् ॥ ६७ ॥
आयामपरिणाहाभ्यामष्टहस्तमितो हि यः ।
सिंहनामाष्टदोलोऽयं विज्ञेयः षड्भुजोन्नतः ॥ ६८ ॥
सर्व्वोऽथ द्विविधः प्रोक्तः सच्छदिश्चापि निश्छदिः ।
काष्ठवस्त्रघटादीनां मणीनां चामरस्य च ॥ ६९ ॥
चतुर्द्दोलवदुन्नेयो नियमोऽन्योपि सूरिभिः ।
पूर्व्ववन्निश्छदेर्मानं (३) ध्वज-मानमिहोच्यते ॥ ७० ॥

---

(१) -य यां विदुः इति (क) पुस्तक पाठः ।
(२) सिंहानामाष्टदोलोऽयं इति (ख) पुस्तक पाठः ।
(३) पूर्व्ववन्निश्छदियानं इति (ग) पुस्तकपाठः ।

दश (१) ध्वजास्तेषु चाष्टौ स्वामिहस्तद्वयोन्मता: ।
पश्चादग्रे ध्वजौ राज्ञश्चतुर्हस्तमितौ मतौ ॥ ७१ ॥
मणिचामरपद्मानां निर्णयो निष्पताकवत् ।
निर्ध्वजश्चाष्टदोलो यः शिविकेति स गद्यते ।
मणिकुम्भमुखादीनां नियमो नवदण्डवत् ॥ ७२ ॥

इत्यष्टदोल-कथनम् ।

एवं द्वादश-षोड़श-विंशति दोलादिका: (शानया) कार्य्या: ।
मानं सार्द्धद्विगुणितं सार्द्धत्रिगुणितं युक्तमेतेषाम् ॥ ७३ ॥
विंशतिदोलात्परतो भोजमते सम्भवेद्यानम् ।
यानं वह्वनुयोज्यं वहुगुणमेतज्जगाद वै व्यास: ॥ ७४ ॥
भविष्योत्तरेऽपि,—
यदुक्तं द्विपदं यानं तेन मानेन यो नृपः ।
स्वयानं कुरुते दिव्यं स चिरं सुखमश्नुते ॥ ७५ ॥
स्वयोगयुक्तयानस्थो भोगमाप्नोति मानवः ।
परयौगिकयानस्थः क्लेशमाप्नोति पुष्कलम् ॥ ७६ ॥
यो दम्भादथवाऽज्ञानाद् यानं प्रकुरुतेऽन्यथा ।
तस्यैतानि विनश्यन्ति आयुर्व्विद्या यशोधनम् ॥ ७७ ॥
प्रधानं यानमाश्रित्य नियमोऽयं समाश्रितः ।
नाप्रधाने निर्णयोऽस्ति तस्मिन्स्तु मनोज्ञता ॥ ७८ ॥

इति यानयुक्तौ द्विपद-यानोद्देशः ।

---

(१) कुश इति (क) पुस्तक पाठः ।

## अथ निष्पदयानोद्देशः । †

नौकाद्यं निष्पदं यानं तस्य लक्षणमुच्यते ॥ ७९ ॥
अश्वादिकन्तु यद्यानं स्थले सर्व्वं प्रतिष्ठितम् ।
जले नौकैव यानं स्यादतस्तां यत्नतो वहेत् । ८० ॥

### अथ कालः ।

सुवारवेला तिथि चन्द्र योगे,
चरे विलग्ने मकरादि षट्के ।
ऋक्षेऽन्त्य (१) सप्तस्वतिरेकतोऽन्ये ;
वदन्ति नौका घटना(का)दिकर्म्म ॥ ८१ ॥
अश्विखरांशु सुधानिधि-पूर्व्वा,
मित्र धनाच्युतभे(ते) शुभलग्ने ।
तारक योगतिथीन्दुविशुद्धौ
नौगमनं शुभदं शुभवारे ॥ ८२ ॥

---

(१) रुचीति सप्तव्यतिरेक इति (क) पुस्तक पाठः ।

---

"दुर्गाणि विश्वा नावेव सिन्धुम्" ( वेदः ) ।

"समुद्र संयानम्"—नावाद्वीपान्तरगमनम्, इति बौधायन धर्म्मसूत्रे तट्टीकायाञ्च ।

"आघूर्णितोवा वा तेन स्थितः पोतेमहार्णवे" इति मार्कण्डेय पुराणे ।

"समुद्रयाने रत्नानि महामूल्यानि साधुभिः ।
रत्न-परीक्षकैः सार्द्धमानयिष्ये बहूनिच ॥
शुकेन सह संप्राप्तो महान्तं लवणार्णवम् ।
पोतारूढास्ततः सर्व्वे पोतवाहै रुपासिताः ॥
अपारे दुस्तरेऽगाधे यान्ति वेगेन नित्यशः ॥"

इति वराह पुराणे ।

अन्यत् सर्वं ज्योतिश्चक्रे, अश्वियानमीमांसायां द्रष्टव्यम् ॥

वृक्षायुर्व्वेदगदिता वृक्षजातिश्चतुर्व्विधा।
समासेनैव गदितं तेषां काष्ठं चतुर्व्विधम् ॥ ८३ ॥

तद्यथा।

लघु यत् कोमलं काष्ठं सुघटं ब्रह्मजाति तत्।
दृढ़ाङ्गं लघु यत् काष्ठमघटं क्षत्त्रजाति तत् ॥ ८४ ॥
कोमलं गुरु यत् काष्ठं वैश्यजाति तदुच्यते।
दृढ़ाङ्गं गुरु यत् काष्ठं शूद्रजाति तदुच्यते।
लक्षणद्वययोगेन द्विजातिः काष्ठसंग्रहः ॥ ८५ ॥
क्षत्त्रियकाष्ठैर्घटिता भोजमते सुखसम्पदं नौका।
अन्ये लघुभिः सुदृढ़ैः विदधति जलदुष्पदे(१)नौकाम् ॥ ८६ ॥
विभिन्नजातिद्वयकाष्ठजाता न श्रेयसे नापि सुखाय नौका।
नैषा चिरं तिष्ठति पच्यते च विभिद्यते वारिणि मज्जते च ॥८७॥

न सिन्धुगाद्यार्हति (२) लौहवन्धं,
तल्लोह-कान्तैः क्रियते हि लौहम्।
विपद्यते तेन जलेषु नौका;
गुणेन वन्धं निजगाद भोजः ॥ ८८ ॥

अथ लक्षणानि।

सामान्यञ्च विशेषञ्च नौकाया लक्षणद्वयम् ॥ ८९ ॥

तत्र सामान्यम्।

राजहस्तमितायामा तत्पादपरिणाहिनो।
तावदेवोन्नता नौका क्षुद्रेति गदिता वुधैः ॥ ९० ॥

---

(१) जलदुष्पदैः इति (क) पुस्तकपाठः।
(२) न सिन्धुगाद्यर्हति लौहवन्धं इति (ख) पुस्तक पाठः।

अतः सार्द्धमितायामा तदर्द्ध-परिणाहिनी।
त्रिभागेणोत्थिता नौका मध्यमेति प्रचक्षते ॥ ९१ ॥
क्षुद्राथ मध्यमा भीमा चपला पटलाऽभया (१)।
दीर्घा पत्रपुटा चैव गर्भरा मन्थरा तथा ॥ ९२ ॥
नौकादशकमित्युक्तं राजहस्तैरनुक्रमम्।
एकैकवृद्धैः(वृद्धेः) सार्द्धैश्च विजानीयाद् द्वयं द्वयम् ॥ ९३ ॥
उन्नतिश्च प्रवीणा च हस्तादर्द्धांश-सम्मिता।
अत्र भीमाऽभया चैव गर्भरा (२) चाशुभप्रदा ॥ ९४ ॥
मन्थरा परतो यास्तु तासामिवाम्बुधौ गतिः।
तासां गुणास्तु संक्षेपात् दृढ़ता च प्रकीर्णता ॥ ९५ ॥

अथ विशेषः।

लौहताम्रादिपत्रेण कान्तलोहेन वा तथा।
दीर्घा चैवोन्नता चेति विशेषे द्विविधा भिदा ॥ ९६ ॥

तत्र दीर्घा यथा,—

राजहस्तद्वयायामा अष्टांश-परिणाहिनी।
नौकेयं दीर्घिका नाम दशाङ्गेनोन्नतापि च ॥ ९७ ॥
दीर्घिका तरणिर्लोला गत्वरा गामिनी तरिः।
जङ्घाला प्लाविनी चैव धारिणी वेगिनी तथा ॥ ९८ ॥
राजहस्तैकैकवृद्धा(द्या) नौकानामानि वै दश।
उन्नतिः परिणाहश्च दशाष्टांशमितौ क्रमात् ॥ ९९ ॥
अत्र लोला गामिनी च प्लाविनी दुःखदा भवेत्।
लोलाया मानमारभ्य यावद्भवति गत्वरा ॥ १०० ॥

(१) पटलाभिधा इति (क) पुस्तकपाठः।
(२) न गुरा इति (ख) पुस्तकपाठः।

लीलायाः फलमाधत्ते एवं सर्व्वासु निर्णयः ।
वेगिन्याः परतो या तु सा शिवायोत्तरा यथा ॥ १ ॥
भोजोऽपि,—
नौकादैर्घं यथेच्छं स्यात् तत्रैतानि विवर्ज्जयेत् ।
हस्तसंख्या परित्याज्या वसुवेद (१) ग्रहोत्तरे ॥ २ ॥
षष्ट्युत्तरमिता नौका कुलं हन्ति बलं धनम् ।
नवतेरुत्तरे यापि या चत्वारिंशतेः परा ॥ ३ ॥
एतेन चत्वारिंशत्-षष्टि नवति (२) संख्या ततत्परतोऽपि ।
यावदपरदशकं तावदेव तत्फलमिति ॥ ४ ॥

इति दैर्घ्यं ।

अथोन्नता ।

राजहस्तद्वयमिता तावत्प्रसरणोन्नता ।
इयमूर्द्ध्वाभिधा (३) नौका क्षेमाय पृथिवी-भुजाम् ॥ ५ ॥
ऊर्द्ध्वानूर्द्ध्वा स्वर्णमुखी गर्भिणी मन्थरा तथा ।
राजहस्तैकैक वृद्ध्या नाम पञ्चत्रयं भवेत् ॥ ६ ॥
अत्रानूर्द्ध्वा गर्भिणी च निन्दितं नामयुग्मकम् ।
मन्थरायाः (४) परा यास्तु ताः शुभाय यथोद्भवम् ॥ ७ ॥
भोजोऽपि,—
बाणाग्न्युत्तरतो मानं नौकानाम शुभं वहेत् ।
पञ्चाशदूर्द्ध्वादुन्नासं धननाशं त्रयोऽर्द्धतः ॥ ८ ॥

इत्युन्नता ।

---

(१) वसुदेव इति (क) पुस्तकपाठः ।
(२) न भवति इति (ख) पुस्तकपाठः ।
(३) इयमूर्द्ध्वाविधा इति (ग) पुस्तकपाठः ।
(४) मन्थरीयाः इति (घ) पुस्तकपाठः ।

धात्वादीनामतो वच्मे निर्णयं तरि-संश्रयम्।
कनकं रजतं ताम्रं त्रितयं वा यथाक्रमम्॥ ९॥
वद्माभिः परिन्यस्य नौका चित्रण-कर्म्मणि।
चतुःशृङ्गा त्रिशृङ्गाभा (१) द्विशृङ्गा चैकशृङ्गिणी॥ १०॥
सितरक्तापीतनीलवर्णान् दद्याद् यथाक्रमम्।
केशरी महिषो नागो द्विरदो व्याघ्र एव च॥ ११॥
पक्षी भेको मनुष्यश्च एतेषां वदनाष्टकम्।
नावां (२) मुखे परिन्यस्य आदित्यादि-दशाभुवाम्॥ १२॥
कलसो दर्पणश्चन्द्रस्त्वेदशानां महीभुजाम्।
हंसः केकी शुकः सिंहो गजोऽहिर्व्याघ्र षट्पदौ॥ १३॥
आदित्यादिदशा जात(ता) नौकोपरि परिन्यसेत्।
चतुस्त्रित्वेक विमिता चतुर्व्वर्णा यथाक्रमम्॥ १४॥
आच्छादनं चतुष्पाते कमला नाम कथ्यते।
तत् संख्याशतपादे मे तदर्द्धैमिवापरात्॥ १५॥
शुक्लरक्तोथचित्रश्च पीतः कृष्णस्त्रिभिस्त्रिभिः।
अवशासिक संज्ञानां वस्त्रवर्णाष्टकं विदुः॥ १६॥
नौकासु मणिविन्यासो विज्ञेयो नवदण्डवत्।
मुक्तास्तवकैर्युक्ता नौका स्यात् सर्व्वतो भद्रा॥ १७॥
तत् संख्या चेदथ (३) रसवेद इयसम्मिता क्रमशः।
कनकादीनां माला(मनो) जयमालेति गद्यते सद्भिः॥ १८॥

---

(१) चतुःशृङ्गाद्रिशृङ्गाभा इति (क) पुस्तक पाठः।
(२) नौका इति (ख) पुस्तक पाठः।
(३) वेदसुरस इति (ग) पुस्तक पाठः।

ब्रह्मक्षत्रे द्वितये एकैके वैश्यशूद्रयोनौ ।
निर्गृहं सगृहं वाथ तत्सर्व्वं द्विविधं भवेत् ॥ १८ ॥
निर्गृहं पूर्व्वमुद्दिष्टं सगृहाणि यथा(च) शृणु ।
सगृहा (१) त्रिविधा प्रोक्ता (क्षोक्ता) सर्व्वमध्याग्रमन्दिरा ॥२०॥
सर्व्वतो मन्दिरं यत्र सा ज्ञेया सर्व्व-मन्दिरा ।
राज्ञां केशाश्वनारीणां यानमत्र प्रशस्यते ॥ २१ ॥
मध्यतो मन्दिरं यत्र सा ज्ञेया मध्यमन्दिरा (२) ।
राज्ञां विलास यात्रादि(त्वं) वर्षासु च प्रशस्यते ॥ २२ ॥
अग्रतो मन्दिरं यत्र सा ज्ञेया त्वग्रमन्दिरा ।
चिरप्रवास यात्रायां रणे काले घनात्यये ।
मन्दिर(रा)मानं नौका प्रसरत एवार्द्ध (३) भागतो न्यूनम् ॥२३

भोजस्तु ।

दीर्घवृत्तवसुषट्-दिवाकरानेक-दिङ् नवमिता यथाक्रमम् (४) ।
राजपञ्चभुजसम्मितोन्नति मन्दिरे तरिगते महीभुजाम् ॥ २४ ॥
भास्करादिक-दशाभुवां पुनर्धातु निर्णयनमत्र पूर्व्ववत् ।
पताकाकलसादीनां निर्णयो नवदण्डवत् ॥ २५ ॥
काष्ठजं धातुजञ्चेति मन्दिरं द्विविधं भवेत् ।
काष्ठजं सुखसम्पत्त्यै विलासे धातुजं मतम् ॥ २६ ॥

---

(१) सदाद्या इति (क) पुस्तक पाठः ।
(२) मन्दिराङ्गनां इति (ख) पुस्तक पाठः ।
(३) प्रसरताल्र वा सुभागत इति (ग) पुस्तक पाठः ।
(४) दीर्घवृत्तदिबाकर वसुषट्दिवाकरषिक दिग्भुषमिता यथाक्रमात् । इति (घ) पुस्तक पाठः ।

अत्र शय्यासनादीनां मन्थरोत्तोचयोरपि (१) ।
अन्येषाञ्चैव मुनिभि र्निर्णयः पूर्ववन्मतः ॥ २७ ॥
दिङ्मात्रमिदमुद्दिष्टं नौकालक्षणमग्रजम् ।
प्रधानेष्वेव नियमो अप्रधाने न निर्णयः ॥ २८ ॥
लघुता दृढ़ता चैव गामिता छिद्रता तथा ।
समतेति गुणोद्देशो नौकानां(यां) सम्प्रकाशितः ॥ २९ ॥
एवं विचिन्त्य यो राजा नौकायानं करोति च(हि) ।
स चिरं सुखमाप्नोति विजयं समरे श्रियम् ॥ ३० ॥
योऽज्ञानादन्यथा यानं नौकानां कुरुते नृपः ।
तस्यैतानि विनश्यन्ति यशो वीर्य्यं बलं धनम् ॥ ३१ ॥
इति निष्पदयानोद्देशे नौका-यानम् ॥ ० ॥

---

## अथ जघन्यजलयानानि ।

यथा,—
नौकान्यतो जले(स्थ)यानं जघन्यमिति गद्यते ।
तद्भेदा बहवस्ते तु पाश्चात्यानां प्रकीर्त्तिताः ॥ ३२ ॥
द्रोणीरूपन्तु यद्यानं द्रोणीयानं तदुच्यते ।
घटी(टा)भिर्घटितं यानं घटो नौकेति गद्यते ॥ ३३ ॥
तुम्बराद्यैस्तु (२) फलैर्यानं फलयानं प्रचक्षते ।
चर्म्मभिःस्थू(स्तू)लपूर्णैर्यच्चर्म्म-यानं तदुच्यते ॥ ३४ ॥

---

(१) अत्र शय्यासनादीनामन्वरोन्नोचयोरपि इति (क) पुस्तक पाठः ।
(२) तद्वाद्यैन्त इति (ख) पुस्तक पाठः ।

यानं यन्त्रघुभिर्वैद्यँ च-यानन्तदुच्यते ।
जन्तुभिः सलिले यानं जन्तुयानं प्रचक्षते ।
वाहुभ्यां सन्तरेद्वारि जघन्येषु न निर्णयः ॥ १५ ॥

श्रीभोजराजीये युक्तिकल्पतरौ निष्पदयानोद्देशः ॥

इति श्रीमहाराज भोजराज-विरचितो युक्तिकल्पतरुः समाप्तः ॥ ० ॥



# युक्तिकल्पतरूल्लिखित-ग्रन्थनामानि ।